नयति। धृतोदकरवालसञ्चयोऽपि परमकाण्ड एव सम्पतन् महापदं विग्रहेण लभते। राजसेन रहितो राजसे न रहितो

—सत्त्वेन गुणेन, खारचरितो यो रिपुमण्डलायत: प्रबलमण्डलाग्रत:, निर्हृतिं कौक्षेयकाम्; यद्वा—रिपुमण्डलायत: सपत्नीसमूहायत:, [सप्तम्यर्थे तसि:] निर्गता हतिरन्यपुरुषान्तरवरणेच्छा यस्या:, मत्वाखी तामुपेत्य तिष्ठति, ["वर्त्तमान-सामीप्ये" इति लट्] पूर्वमन्या: सपत्नीरनादृत्य त्वं तस्यामेवानुरक्त: स्थित:, इदानीं तत्रैव कर्त्तव्यं त्वयेति भोति, ("कौक्षेयको मण्डलाग्र: करवाल: कृपाणवत्" इत्यमर:। "मण्डलं देशवन्दयो:" इति विश्व:। "निर्हृतिस्तु सुखे सौख्ये अभवे ध्वनयेऽपि च" इति धरणि:)। अपरा आह—स खलु वीर: शूर:, य: प्रतिपक्षस्य बला:, सम्प्रहारत: कुञ्जरान् गजान्, नयति; यद्वा—वि विशेषेण, ईरयति, वीन् पक्षिणो वा, ईरयतीति वीर:, सम्प्रहारतो गमनात्, ("सम्प्रहारो रणे गतौ" इति हैम:) [ईर गतौ कम्पने च]; यद्वा—विशिष्टा इरा मद्यं यस्य मद्यप इति यावत्, ("इरा भूमिसुरावारि-भारतीषु प्रयुज्यते"। "कुञ्जरोऽनेकपे केशे धातक्यामपि कुञ्जरा" "वीरस्तु सुभटे श्रेष्ठे वीरो मल्लान्तरेऽपि च" इति विश्वप्रकाशश्चिपु) प्रतिगत: पक्षं प्रतिपक्षो बलं तस्य; यद्वा—प्रतिपक्षस्य सख्यु: सहायस्य वा, ("पक्षो मासार्द्धके गेह-पार्श्वे साध्यविरोधयो:। केशादे: परतो हस्ते बले सखिसहाययो:॥ पतङ्गे चुल्लीरन्ध्रे च देहाङ्गे राजकुञ्जरे॥" इति विश्वप्रकाश:) यद्वा—वि विशेषेण, ईं कामम्, ईं लक्ष्मीं वा, रात्यादत्ते वीर:, ("इकार: कथ्यते कामो लक्ष्मीरीकार उच्यते" इत्येकाक्षरकोष:) सम्यक् प्रकृष्ट:, अत्युत्कृष्ट:, हारो मुक्तादिमाला तान् सम्प्रहारत:, [द्वितीयार्थे तसि:] कुञ्जरान् केशान्, नयति, ("हारो मुक्तावली युद्धे" इति विश्व-प्रकाश:) यद्वा—सम्प्रहारतोऽत्युत्कृष्टरतियुद्धे, [सप्तम्यर्थे तसि:] ("खलु स्यात् प्रतिषेधेऽपि निश्चयेऽप्यवधारणे" इति विश्व:)। अन्या आह—धृत उदकरेण विशालहस्तेन, बालानां शबरकेशानां, सञ्चयो येन; यद्वा—धृत उदकं दान्, करवालस्य कृपाणस्य, सञ्चयो येन; यद्वा—उदकपर्यन्तौ करावूरू वरौ, ताभ्यां धृतो बालानां प्रतिपक्षलक्ष्मीकेशानां, सञ्चयो येन, आ-जानुबाहुरित्यर्थ:; यद्वा—धृत उदकरेण भूरिदानभागेन, बालानामज्ञानां, सञ्चयो येन; यद्वा—धृत उदकरेणोद-कराणां वा बालानां सञ्चयो येन; यद्वा—धृत उदकरबालानां सञ्चय:, सुरतबन्धे, विग्रहेण शरीरेण कलहेन युद्धेन पक्षियहणेन वा, महापदं महास्थानं महापत्तिं वा, पुं शब्दं, परमत्वेन वा, अकाण्डेऽनवसरे, पुरमकाण्डे उत्कृष्टावसरे वा, ("विग्रहो

भुवम्। विशारदा विशारदाभ्रविशदा विशदात्मनीनमहिमा महिमानरक्षणक्षमा क्षमातिलक! धीरताधीरता मनसि भूतता-भूतता वचसि। साहु,सेन! साहसेन कमला कमलापराजिता-

शुचि विस्तारे प्रविभागशरीरयोः" इति हैमः)। अपरा आह—राजसे रजोगुण-विकारे सति, अनरहितो मनुष्याननुकूलः, त्वं न राजसे, रहितो मलाद्या जनैर्वा त्यक्तः; [रह त्यागे क्तः] यद्वा—राजसेन [प्रज्ञाद्यण्] रजोगुणेन, रहितो नरहितो मनुष्यहितः, न राजसे भुवम्; यद्वा—राजसः रजोगुणप्रधानः, इनरहितोऽप्रभुस्त्वं, न राजसे, यतो रहितः प्रभुणा त्यक्तः, नरेषु हितो राजसे भुवम्। ("ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽव्ययत्" इति विश्वप्रकाशः)। यमकालङ्कारः। अन्या आह—विगता शारदा सरस्वती यस्य तत्सम्बोधनं, धृष्टो वा चतुरो वा, ("विशारदो बुधे धृष्टे" इति विश्वप्रकाशः) स्त्रीविशेषणं वा, वि विशिष्टः, शारदोऽभ्रो मेघः, तद्वद्विशदा निर्मलान्तःकरणा, विशन् प्रविष्टो भवन्, आत्मनीन आत्महितः, महिमा महित्वं यस्याः, मह उत्सवो येषां ते महिनः, तेषां मानरक्षणे सम्मानपालने, क्षमा, क्षमातिलक! पृथ्वीभूषण! शान्तितिलक! वाहः शान्तिप्रदर्शक! तव मनसि धीरता बुद्धिरता, सार्वकालिकौत्सुक्यः,अधीरता कातरता, वचस्यभूतताऽसत्यता, भुवि पृथिव्यां, तता विस्तृता; यद्वा—अकारो वासुदेवः, तस्माद्भूतसत्ता अन्तर्वता; यद्वा—अक्षेण व्यवहारेण, मा लक्ष्मीः, सा तिलकमस्य; यद्वा—अक्षस्य विभीतकस्य, मा लक्ष्मीः, तत्तिलक! ("अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः। आत्मजे पाशके चाक्षम्" इति विश्वप्रकाशः) विशेषेण शारं हिंसां, ददातीति विशारदः, [शॄञ् हिंसायां घञ्] महिम्ना अनन्ति प्राणन्ति ते महिमाना मानधनाः, तेषां रक्षणक्षम! हे धीर! तादृशस्य, धीरतास्तव मनसि तव वचसि भूतता सत्यता, भूतता पृथ्वीप्रख्याता, ("भूतं क्ष्मादौ पिशाचादौ भूतं सत्योपमानयोः" इति विश्वः) विशारदाभ्रविशदा विशिष्टशरच्मेघस्वच्छा, निष्कपटहृदयेति यावत्, आत्मनि स्वविषये, विशिष्टं शं श्रेयः, यानि विशदाः, [दो अवखण्डने] इनस्य सूर्यस्य, महिमा महत्त्वं यस्य तादृशस्त्वम्। ("श श्रेयसि शकारः स्याच्छिवे सौम्ये प्रकीर्तितः" इत्येकाक्षरकोषः। "शं धर्मे शास्त्रु शास्तरि" इति विश्वप्रकाशः) ["आत्मन्विश्वजनभोगोत्तरपदात् खः" इति खः] आत्मनीने। अपरा आह—सा मत्सखी, त्वामाह, हे सेन! सप्रभो! परतन्त्र! सा मनसाऽपि नान्यमनुसरामीति प्रतिज्ञाविशिष्टाऽहम्, आहसेन भवदीय-गुणाहेन, कस्य सुखस्य, मला आधारपात्री, [मल मल्ल धारणे पचाद्यच्] पराजिता

पराजिता। सा त्वदर्पणा दर्पणाकारविमलाशया शयाब्जविनिर्जितकिसलया सलयाङ्गुलिविभ्रमेण विभ्रमेण प्रतिगवाक्षशलाकाविवरं विलोकयन्ती विलोकयन्ती। त्वया विना साविना

---

कमला लक्ष्मीर्यस्याः सा कमलापराजिता, [ आहिताग्न्यादिः ] अत एवापराजिता अन्याभिः स्त्रीभिः रूपसुरतकौशलादिभिरपराभूता ; ("पराजितपराभूतौ" इत्यमरः) यद्वा—आ इत्येकाक्षरेण, अपराजिता एतदभिधाना देवी, पराजिता पराभूता, के मस्तके कमला शिरोमाल्यविशिष्टा, सीमन्तकमलग्रथनभिन्नेति यावत्, तादृशी कमला लक्ष्मीः ; यद्वा—आ इत्येनाभिसरणरूपेण, कमला लक्ष्मीः, तत्परा कमलापरा लुब्धेति यावत्, जिता, यथा लुब्धा नाभिसरत्येवं प्रीत्या मय्यप्यभिसरतीत्यर्थः ; ननु कुरूपा सा केनापि नाद्रियते इति सा स्वतो धावति न तत्र मन्युहेतुरित्याह—आ इत्येन सा प्रसिद्धा, कमला लक्ष्मीः, पराजिता, मत्सख्येति शेषः ; सखीभावमाह —[ ला आदाने ] लातीति ला न ला अला लुब्धा, कं सुखम्, अपराजिता त्वया पूर्वं प्रोत्साहनाद्दीपिता ; [ राजृ दीप्तौ ] यद्वा—आ इत्येन आ इत्येन, युक्तेति शेषः, सा मत्सखी, कमला वरस्त्री, आकमला बहुलक्ष्मीका ; ("कमला तु वरस्त्रियाम्" इति शाश्वतः) [ कप इति "स्वनहसोर्वा" इत्यप्-प्रत्ययान्तः ] यद्वा—यया परा कमला, पराजिता सा मत्सख्याह, आ इत्येकाक्षरयुक्तेन त्वया, जितमात्मानमाहेत्यर्थः, कीदृशी ? इना समर्थः, कमला लक्ष्मीर्यस्यास्तस्या लक्ष्मीदानभोगादियुक्ता, न त्वस्मानिकलक्ष्मीवद्दानभोगहीनेत्यर्थः। इतरा आह, त्वय्यर्पणमस्यास्त्वदर्पणा, दर्पणाकारो मुकुराकारः, आशयो यस्याः, शयाब्जेन करकमलेन, विनिर्जितकिसलया जितनवपल्लवा, अङ्गुलिविभ्रमेणाङ्गुलिभ्रमणेन, सलया सविलासा, ("लयो विलासे संश्लेषे साम्ये तौर्य्यत्रिकस्य च" इति विश्वप्रकाशः) गवाक्षेषु शलाका जन्तूनामागमनप्रतिषेधाय प्रयुक्ताः काष्ठादिनिर्मिताः, तासां विवरं विवरं प्रति प्रतिगवाक्षशलाकाविवरं, विलोकयन्ती पश्यन्ती, विलोकवत् पथिजनवत्, आचरन्ती विलोकयन्ती, यथा पथिकः पञ्जरशलाकाऽन्तरेण पश्यन्त्येवं साऽपि भवानागतो न वेति गवाक्षशलाकाऽन्तरेण पश्यति ; गवाक्षशलाकाऽन्तरदर्शनं परकीयात्वद्योतकम् ; ("लाक्षालक्ताऽपि मदनपालिकाशल्ययोः शरे। कले पञ्जरकाष्ठे च" इति विश्वप्रकाशः) उक्तं च—"स्वानूढा-स्वानुरक्ता स्त्री परकीया निगद्यते। उत्तमाधमभेदाभ्यां द्विविधेयं पराङ्गना॥ अकल्पितानुरागैषा कीयाऽऽत्तोत्तमा भवेत्। तद्भिन्ना त्वधमा ज्ञेया तद्भेदा लक्षिताः स्थिताः॥ परोढाऽकन्यकाभेदात् द्विविधा द्विविधा मता। विदग्धाऽसुदिता चैषा-

सायमनुभवन्तो दुःखानि। जीवनायक! जीवनाय क इह नाश्रयन्ति सुभगम्?। अन्यास्तावदासतां दासतां पुरतोऽहमेव भजामि मैत्रतोऽमैत्रतोऽस्तु। अन्तःसारतः सारतः किमपि

---

ऽनुशयानाऽथ लक्षिता॥ मुग्धा च कुलटा चेति षट्प्रकारोदिता बुधैः॥" इत्यलङ्कृतेश्चरलहारि; यत्तु अप्रकटपरपुरुषानुरागा परकीयेति तन्न, कुलटाया असङ्ग्रहात्; उपालम्भपक्षे नञ्समासः, विश्वमेव भ्रमणेन, ("स्यात्कलाकाऽपि मदन-सारिका-शल्ययोः शरे। पञ्जरकाष्ठे च" इति विश्वप्रकाशः)। इतरा आह, अविना मेषेण, त्वया विना सायं सायङ्काले, दुःखानि त्वद्वियोगदुःखानि, अनुभवन्तो तिष्ठति, तामनुसरेति व्यङ्ग्यम्; धीरेयं, "प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा" इति रसरत्नहार:; अविना रक्षकेण, त्वया विना दुःखान्यनुभवन्त्यतः सायं खादम्, अनुभवन्ती तिष्ठति; [अव रक्षणादौ, "सर्वधातुभ्य इनिः" इतीनिः। षोऽन्तकर्मणि, "आदेच:" इत्यात्वम्, "आतो युक्" इति युक्]। अन्या आह, जीवनायक! प्राणहारक! जीवनाय जलार्थं, जलाहरणार्थमित्यर्थः, सुभगं शोभनपशुं त्वां, के नाश्रयन्ति? (भग-मैश्वर्यमाहात्म्य-ज्ञानवैराग्ययोनिषु। पशुवीर्यप्रयत्नेच्छा-श्रीधर्मार्कविमुक्तिषु॥" इति विश्वप्रकाशः) अधीरोक्तिरियम्, "अधीरा परुषोक्तया" इति रसरत्नहार:; प्रकारे—जीवनायक! मत्स्यजीवनेश! जीवनाय प्राणधारणार्थं, के जनाः, सुभगमैश्वर्ययुक्तं त्वां, नाश्रयन्ति? के इति पुंलिङ्गनिर्देशो यदि पुरुषाः स्वप्राणधारणार्थं त्वामाश्रयन्ति तर्हि स्त्रीणां का वार्त्तेति द्योतयितुम्। अपरा आह, अन्यया मत्सपत्निरिताया, अतः चिन्तनाज्जीवनम्, अत एवावद! तस्यां क्रोधादसम्भाषक! असतां परपीडा-ऽनभिज्ञानां, पुरोऽग्रे, दासतां दास्यम्, अहमेव भजामि, अतोऽमैत्रतोऽनिर्बन्धभावात्, मैत्रमस्तु; ("वटो वटावटौ वशा" इत्यमरः) यद्वा—अन्यैस्तदपि वधाऽन्यैः प्रकारैर्भि-स्तत्सम्बन्धिभिर्वा, अस्ता क्षिप्ता, तया सह वर्तते तत्सम्बोधनम्; यद्वा—अन्यास! अत एव दास! पुरोऽहमेव भजामीति तां दासतां पूर्वस्वीकृतां मत्सख्या दासताम्, अव रक्ष; यद्वा—अन्यासेनान्यनारीपरित्यागेन, अवदा अभाषणकर्त्री, "निर्माल्योज्झित-पुष्पदामनिकरे का षट्पदानां रतिः?" इत्यहं सतामेव दासतां भजामीति; यद्वा—अवनमाय:, [अञ्] अन्यासानामावदा रक्षकर्त्री, अमरभ्रमरवदिति दीपनं, प्रीतिप्रदा वा हर्षप्रदा वा; यद्वा—अप्रभवो नपन्धोऽस्मासि अमि! [सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः, "हापितः क्वासि हे सुभु!" इत्येव

विश्वस्य विश्वस्य व्यवस्था समासाद्यसमासाद्यमनेककाल-सङ्गीतसङ्गी तनुषे तनुषेकमनङ्गमनङ्गपुष्पेषुपुष्पेषु कृता तरसा जातरसा मन्दाचमन्दा चणं भ्रमन्ती मुह्यति। कामधुराधरेण का मधुराधरेण मुक्ता रजोराजिविशेषकेण विशेषकेण मुखेन्दुना। तव हृदि लग्ना स्तदिमाकरेण करेण स्वेदबिन्दु-

नारीणां, मुखं न मलिनितम्? इति काकुः, ["नपुंसकमनपुंसकेन" इति नपुंसकशेषः] ("क्लीवे कुशल इत्यपि" इत्यमरः) यद्वा—कमलया लक्ष्म्या, क्लीबेन भवता परेषां नारीणां कमलाकृति मुखं न मलिनितम्? काकुः पूर्ववत्; यद्वा—कमलाकृतिन्! पद्माकार! निर्लेपत्वेन साम्यं, लक्ष्मीकुशलेति वा सम्बोधनम्; नारीणामत्र साकल्येनातिकठिनतया वैदग्ध्येन वा कोऽपि नाम्नाम् द्रावयितुं पटुरिति प्रसन्नतापन्नानां, नारीणां कमलाकृति कमलरम्यं, मुखं न मलिनितम्? इति काकुः; अनाकुरूपालम्भपक्षः। कश्चिदाह, विश्वस्य सर्वस्य, विश्वस्य विश्वासं कृत्वा, सा तव प्रिया, समा सलक्ष्मीका, विगता व्यवस्था मर्य्यादा यस्यां वा सख्याः, आदितोऽसमा विषमा, त्वं तु साद्यमासादयोग्यं, तनुषे शरीराय, ("तनुः स्यात् तनुषा साईम्" इति शब्दभेदप्रकाशः) कमलपक्षेऽर्जने तनुषे पालयसि विश्वस्य सर्वस्य,अनन्तो ऽध्ये त्वया व्यवस्था समासादि असमं विषमसस्येत्यसमासा है असमाय! इति वा, आदौ प्रथमम्, अनन्तोः कामस्य, सेकं कं सुखं, ("पुष्पं विकाशे कुसुमे स्त्रीणाम् रजसि स्मृतम्" इति विश्वः) अनङ्गमशरीरं, पुष्पेषुपुष्पेषु कामशरेषु, तरसा वेगेन, जातरसा मन्दाचं मन्दक्षणं, भ्रमन्ती मुह्यति; पाठकर्ने—हेऽनङ्ग! साक्षात् काम! अनङ्गमसम्बद्धं, प्रति पुष्पेषुपुष्पेषुकृता कामबाणहता, तरसा वेगेन, जातरसोत्पन्नानुरागा, मन्दाचमन्दा लज्जामन्थरा, चणं भ्रमन्ती मुह्यति। धुराया धरो धुराधरः, [भागुरिमते टाप्] कामं धुराधरस्तेनात्यन्तभारवाहकेन, अधरेण मौषेन, रजोराजिभिर्विशेषकं तिलकं यस्य तेन त्वया, विशेषस्य हावादेः केवो यत्र तेन मुखेन्दुनोपलक्षिता मधुरा रम्या मूर्त्तिः, का स्त्री, मुक्ता? न काऽपीत्यर्थः, एतादृशेनैतादृश्यो बह्व्य उपभुक्ताः। समालङ्कारः, "समं स्यादानुपूर्व्यं तु यत्र द्वयोरप्यनुरूपयोः" इति लक्षणात्; पाठकर्ने—कामस्य धुः कामधुरा, ["ऋक्पूः" इति समासान्तः] तस्या अधरस्तेन मधुरः सुधाधिकत्वात्, अधरोष्ठो यस्य तेन, मुक्तारजोराजिभिर्विशेषकं तिलकं यत्र तेन, एतन्निर्माणावसरे वक्ष्ये

पयोधरेण पयोधरेण वक्षःफलकाञ्चनेन जितानाविलकाञ्चनेन। कामदारुण! मदारुणनेत्रास्मरमयं रमयन्तं त्वामदयं मदयन्ती परमकमितारं परमकमितारं वाञ्छति। हारिणा हारिणा स्तनकुम्भेन हारिणाक्षिरुचिहारिणा चक्षुषा हारिणा।

---

मुखेन्दवो निर्मितांशेषु रम्यत्वादस्यैव प्रयोगः क्षतौ विविनेति विशेषेण शेषो यस्य तेन मुखेन्दुनोपलक्षिता का काऽपि स्त्री, वर्त्तते, शेषो यदव मत्सखी ज्ञात्वा न चलति चेत् सामान्यरूपेणाभिधानेन नेत्यामोति इत्युक्तिः, ("तमालपत्र-तिलक-चित्रकाणि विशेषकम्" इत्यमरः)। इतरा आह, तव हृदि लग्ना काऽपि वर्त्तते; अपदिश्य आचरणेन, दाक्षीत्वं व्यक्तं, करेण स्वेदबिन्दुभिः पयोधरौ जलधर-स्तेन, वक्षःफलकेऽधमं गमनं यस्य, पतितत्वादित्यर्थः, तेन पयोधरेणोपलक्षिता अनाविलकाञ्चनेन जिता, श्यामवर्णत्वादित्यर्थः; आवर्जने—अदिक आकारेण करेण स्वेदबिन्दुपयोधरेण वक्षःफलकस्याञ्चनं पूजनं, रम्यत्वं येन, जितमनाविलं स्वच्छं, काञ्चनं येन, गौरत्वादिति भावः, तेन पयोधरेणोपलक्षिता, तव हृदि लग्ना, काऽपि वर्त्तते इति पृच्छति; अस्ति चेत् तामनुसरेति व्यङ्ग्यम्; "अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ" इति सामुद्रिकलक्षणं तु पुरुषविषयम्। [अञ्चु गतिपूजनयोः] ("काञ्चनं चम्पके हेम्नि" इति विश्वः)। अन्या आह, कामेनाभि-लाषेण, दारुण! मदारुणनेत्र! अस्मरमयमदयं रमयन्तं त्वां, परित्यज्येति शेषः, मदयन्ती मत्ता सा, परमत्यर्थम्, अकं दुःखम्, इतारं प्राप्नुवन्तं, परं भिन्नम्, अकमि-तारमकामुकम्, ("अकं पापे च रोगे च" इति विश्वः); आवर्जने—कामेन मदेन दारुण! कठिनमारोपणमध्ययनेन द्रावक! मदयन्ती सौभुजेवनात्, अत एवारुणनेत्र! कामदाभिलाषप्रद! अस्मरमयमदयं रमयन्तं परमकमितारं परमकामुकं, परमकं परमसुखम्, इतारं त्वां वाञ्छति; ("कामुके कमितानुकः" इत्यमरः) अत्रापि समालङ्कारः। परा आह, हारिणाऽन्योऽन्यं युद्धवता, पतितत्वादिति भावः, अरिणा जनानां देवतासम्पादनेनेत्यर्थः, एतादृशेन स्तनकुम्भेनोपलक्षिता, हे गर्त्ते, ऋच्छति हारि, [ऋ गतौ, अच् इः] हारिणा गर्त्तगतेन, अत एवाक्षिरुचिहारिणा प्रेक्षकनेत्राभिलाषहारकेण, कुत्सितत्वादित्यर्थः, चक्षुषा चोपलक्षितं त्वामाह, एतादृग्-दोषविशिष्टा त्वामिताहृक्षमाहेत्यर्थः; आवर्जने—हारिणाक्षिरुचिहारिणा हरिण-चक्षुश्छिमेरकान्तिहारिणा चक्षुषोपलक्षिता, हारिणा हारवता, हारिणा कटि-

अनन्तरं दुग्धार्णवप्रविष्टमिव, स्फटिकगृहप्रविष्टमिव, श्वेतद्वीपनिवाससुखमनुभवदिव जगदामुमुदे। क्रमेण च विघटमानदलपुट-कुमुदकाननकोष-मकरन्द-बिन्दु-सन्दोहमुदित-मुग्ध-मधुकर-कुलकलरुतमुखरितदिगन्ते, चन्द्रिकापानभरालसचकोर-कामिनीभिरभिनन्दितागमने, सुरतभरपरिश्रमखिन्नपुलिन्द-राजसुन्दरीस्वेदजलकणिकाऽपहारिणि प्रयाति सायन्तने तमीयसि निशानिःश्वासनिभे नभस्वति कन्दर्पकेतुस्तमालिका-मकरन्दसहायो वासवदत्ताजनकनगरमयासीत्।

अथ कटकैकदेशविरचिताभ्रंलिहशिखरेण, सुधाधवलेन,

---

कलभकुम्भानुकारित्वाद्रम्येत्यर्थः, स्तनकुम्भेनोपलक्षिता, अनेन मत्सखी युवतिः सुन्दराऽथवा प्रसाधिता चेति, सुगन्धि जाम्बूनदम्। ("हा गर्तेऽपि निगद्यते" इत्येकाक्षरकोषः)। निरीक्ष्य लोकव्यवहारकालं रीतिं कवीनामथ कोषजालम्। व्याख्या मयेयं रचिता महेशपादारविन्दे प्रणिधाय चेतः॥

चन्द्रिकाव्याप्तिं वर्णयन्ति।—अनन्तरं चन्द्रोदयोत्तरं, दुग्धार्णवप्रविष्टमिव स्फटिकगृहेषु प्रविष्टमिव श्वेतद्वीपनिवासस्य सुखमनुभवदिव जगद्भुवनम्, आ साकल्येन, मुमुदे। [मुद हर्षे] क्रमेण कन्दर्पकेतुर्वासवदत्ताजनकनगरमयासीदित्यन्वयः। विघटमानं विकसत्, दलपुटं पत्रपुटं यस्य तादृक्, कुमुदकाननं तस्य कोषेषु मध्यभागेषु, मकरन्दबिन्दुसन्दोहः पुष्परसबिन्दुसमुदायः, तेन मुदितं हृष्टं, मधुकरकुलं तस्य कलरुतेन मुखरितदिगन्ते, चन्द्रिका ज्योत्स्ना, तस्याः पानभरेणालसचकोरकामिनीभिरभिनन्दितागमने स्तुत्यागमने, ("चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः) सुरतभरपरिश्रमखिन्नाः पुलिन्दराजस्य म्लेच्छजातिविशेषराजस्य, सुन्दर्यस्तासां स्वेदकणिकाऽपहारिणि सायन्तने सन्ध्याकालिके, ["सायंचिरम्" इत्यादिना ट्युः] तमीयसि स्वल्पे, अत एव निशानिःश्वाससनिभे नभस्वति वायौ, प्रयाति सति तमालिकामकरन्दो सहायो यस्य सः, [या प्रापणे, "यमरम" इति सगिटौ]।

अथ वासवदत्ताभवनं ददर्शेत्यन्वयः। कटकैकदेशे राजधान्येकदेशे, विरचितमभ्रंलिहं शिखरं यस्य तेन। ["वहाभ्रे लिहः" इति खश्] ("कटकं वलये

एकान्तर-निविष्ट-कनक-मुक्ता-मरकत-पद्मराग-शकलेन, वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन परिगतम्; अनिलोल्लासिताभिः, नभस्तरुमञ्जरीभिरिव, तर्जयन्तीभिरिव गगनार्णवश्रियं, पताकाभिरुपशोभमानम्; कनकशिलापट्टाङ्गण-प्रसृताभिः, कर्पूरकुङ्कुम-चन्दनैलालवङ्गगन्धोदक-परिमल-वाहिनीभिर्वाहिनीभिः, अम्लानतटस्फाटिकपट्टसुखनिषण्ण-निद्रायमाणप्रासादपारावताभिः, प्रभ्रश्यत्तटनिकटविटपिकुसुम-स्तवकितसलिलाभिः, अनवरतमज्जदुन्मज्जदुन्मदयुवतिजन-घनजघनस्फालनोच्छलच्छीकरनिकरस्नपितवेदिकाभिः, कर्पूर-पूरविरचित-पुलिनतट-निविष्ट-निनदानुमीयमान-राजहंसीभिः,

---

स्थानी राजधानीनिलक्ष्मणोः" इति विश्वः)। सुधा चूर्णव्यलेपविशेषः, तया धवलेन। एकान्तरं निविष्टानि कनकं सुवर्णं, मुक्ता मरकतं गारुत्मतं, पद्मराग एषां शकलानि यत्र। वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन प्राकारवलयेन, परिगतम्। ("प्राकारो वरणः शालः" इत्यमरः)। अनिलोल्लासिताभिर्नभस्तरुमञ्जरीभिर्गगनार्णवश्रियं तर्जयन्तीभिरिव पताकाभिरुपशोभितम्। ("पताका वैजयन्ती स्यात्" इत्यमरः)। कनकशिलापट्टाङ्गणेषु प्रसृताभिः, जलयन्त्रविशेषैरिति भावः, "फोहारा" इति "चहर" इति वा भाषायां, "पाटङ्गण" इति "परसार" इति भाषायां प्रसिद्धः। कर्पूरकुङ्कुमचन्दनैलालवङ्गानां गन्धो यत्र तादृगुदकं तत्परिमलवहाहिनीभिर्वाहिनीभिर्नदीभिः। अम्लानतटस्फाटिकपट्टेषु सुखेन निषण्णा अत एव निद्रायमाणाः प्रासादपारावता यासु, निषण्णत्वमज्ञाने निश्चलत्वे च निद्रा तस्यां सुखोपवेशनं हेतुरिति कारणमालालङ्कारः। प्रभ्रश्यद्भिस्तटविटपिकुसुमैस्तीरवृक्षपुष्पैः, स्तवकितं सञ्जातस्तवकं, सलिलं यासाम्। अनवरतमज्जदुन्मज्जदुन्मदयुवतिजनस्य घनजघनास्फालनेनोच्छलच्छीकरनिकरेण स्नपिता आर्द्रीकृता, वेदिका वितर्दिः, प्राङ्गणादौ कृतमुपवेशनस्थानं याभिर्यासां वा ताभिः। ("स्याद्वितर्दिस्तु वेदिका" इत्यमरः)। कर्पूरपूरेण विरचितं यत् पुलिनं तस्य तटे समीपदेशे, निविष्टा उपविष्टा, निनदैर्वाशितैः, अनुमीयमाना राजहंसी यासु ताभिः; भास्तोऽत्र पुलिनभ्रमः। भ्रमात्मकहर्षेरेव्यमुत्तमानालङ्कारः, कर्पूरपुलिनवर्णनेन सम्पत्तेरुत्क-

विकचनीलोत्पलकानन-दर्शिताकाण्ड-चक्रवाक-तिमिरशङ्काभिः, युवतिभिरिव सुपयोधराभिः, सुग्रीवयुद्धकलाभिरिव कीलाल-क्षपितकुम्भकर्णाभिः, सागरकूलभूमिभिरिव सुन्दरीपादपराग-शबलाभिः, नवनृपतिचित्तवृत्तिभिरिव कुल्यापमानकारिणीभिः, अनेकतराभिरुपशोभितम्; शिखरगतमुक्ताजालव्याजेन पुर-युवतिजनदर्शनकुतूहलागतं तारागणमिवोद्वहद्भिः, उपान्त-निलीनाभिः काचकलशाकृतिमुद्वहन्तीभिः शिखिसंहतिभि-रुद्भासितैः प्रासादैरुपशोभितम्; क्वचिदनवरतदह्यमानकृष्णा-

---

महत्त्ववर्णनात् उदात्तालङ्कारोऽप्यत्र, तथाच दण्डी—"आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्। उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः॥" इति। विकचेत्यादि।—रक्तोत्पलपाठपक्षे—रात्रौ विकासासम्भवात्, नीलोत्पलपाठपक्षे—चक्रवाकाणामेव तिमिरशङ्कावर्णनानुपयोगादुपेक्ष्यम। युवतिभिरिव तरुणीभिरिव। ["यूनस्तिः" इति तिः] सुपयोधराभिः शोभनस्तनीभिः; पक्षे—धरतीति धरा, [पचाद्यच्] पयसो जलस्य, धराभिः। ("तरुणी युवतिः समे"। "स्त्रीस्तनाब्दौ पयोधरौ" इति द्वयोरप्यमरः)। सुग्रीवयुद्धकलाभिरिव कीलालेन रक्तेन, क्षपितः कुम्भकर्णो राक्षसो याभिः; पक्षे—कीलालेन पयसा, क्षपितः कुम्भस्य कलशस्य, कर्णोऽंशो याभिः; ("शोणितेऽम्भसि कीलालम्" इति पक्षद्वयेऽप्यमरः)। सागरस्य कूलभूमिभिरिव तीरभूमिभिरिव, सुन्दरीपादपानां रागैः शबलाभिः; पक्षे—सुन्दरीणां पादपरागैश्चरणरेणुभिः, शबलाभिः। ("सुन्दरी तरुभिद्योषिद्भिदोः स्त्री रुचिरेऽन्यवत्")। नवोऽचिरप्राप्तराज्यपदः, नृपतिस्तस्य चित्तवृत्तिभिरिव कुल्यस्य कुले साधोः, ["तत्र साधुः" इति यत्] अपमानकारिणीभिः, पित्रादेरमात्यादयः शिष्टत्वादन्यत्वाद्वा नैनमतिमनुते इति तेषामपमानः; पक्षे—कुल्यानां कृत्रिमाल्पसरिताम्, अपमानकारिणीभिः। ("कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः)। अनेकतराभिर्बह्वीभिः, उपशोभितम्। शिखरगतानां पक्षिप्रवेशवारणार्थमुपरिबद्धानां, मुक्ताजालानां मुक्तामयगवाक्षाणां, व्याजेन पुरयुवतिजनस्य दर्शनार्थं कुतूहलं कौतुकं, तस्मादागतं तारागणमिवोद्वहद्भिः। ("कुतुकं च कुतूहलम्"। "जालं समूह आनाय्यो गवाक्षक्षारकावपि" इत्युभयत्राप्यमरः)। उपान्ते निलीनाभिर्नितरां लीनाभिः, निश्चलतया स्थिताभिः, अत एव काचकलशाकृतिमुद्वहन्तीभिः शिखिसंहतिभिर्मयूरयूथैः, उद्भासितैः प्रासादै-

गुरुधूमपटलैर्दर्शिताकालजलदोदयम्; क्वचिदतिगम्भीरमुरजरवाहूतसानन्दनर्त्तितनीलकण्ठम्; सायन्तनसमयमिव पतितलोकलोचनम्; जनस्थानमिव दारोत्सुकरामम्; मानुष्यकमिवाभिनन्दितसुरतम्; निधानमिव कौतुकस्य; वासमिव शृङ्गारस्य; कुलगृहमिव विभ्रमस्य, सङ्केतस्थानमिव सौन्दर्य्यस्य; वासवदत्ताभवनं भवनन्दनप्रभावो ददर्श।

द्रवसि द्रवसि हितो निगलिते!। चपला चपलायते

---

धूपशोभितम्। क्वचिदनवरतदह्यमानकालागुरुधूमपटलैर्दर्शितकाले जलदानां मेघानाम्, उदयो येन यत्र वा। अत एव क्वचिदतिगम्भीरमुरजरवाहूताः सानन्दं नर्त्तिता नीलकण्ठा बर्हिणो यत्र, रात्रौ मयूरनृत्यवर्णनं तिर्य्यञ्चोऽपि सर्वकालं सुखिनः, मनुष्याणां तु का कथा? इति ध्वनयितुम्। ("मृदङ्गा मुरजाः"। "मयूरो बर्हिणो बर्हौ नीलकण्ठः" इति द्वयोरप्यमरः)। सायन्तनसमयमिव पतितः लोकलोचनः सूर्य्यो यत्र; ("किरणमालिविलोचनहेतयः" इति हारावली) पक्षे—पतितानि सौन्दर्य्यावलोकनार्थं लोकानां लोचनानि यत्र। जनस्थानमिव दारेषु सीतायाम्, उत्सुको रामो राघवो यत्र; पक्षे—दारयतीति दारः कन्दर्पः, तेनोत्सुका रामाः स्त्रियो यत्र। ("सुन्दरी रमणी रामा" इत्यमरः)। मानुष्यकमिव मनुष्यसमूह इव, अभिनन्दिता श्लाघाविषयीकृता, सुरता देवत्वं येन; पक्षे—अभिनन्दितं सुरतं मैथुनं यत्र। कौतुकस्य निधानगृहं भाण्डागारमिव। शृङ्गारस्य वासगृहमिव, "पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातः क्रीडादि-रसकारणम्॥" इत्युक्तमन्यत्र। विभ्रमस्य विलासस्य, कुलगृहमुत्पत्तिस्थानं, "कामोत्सुक्यकृताकारं रूपयौवनसम्पदा। अनवस्थितचेष्टत्वं विभ्रमः परिकीर्त्तितः॥" इति भरतः। भवनन्दनस्य कार्त्तिकेयस्येव, प्रभावो यस्य सः।

इत्यन्योऽन्यं प्रणयेन पेशला रम्याः, प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतु-र्मकरन्देन समं विस्मयमाश्चर्यम्, अकरोत्। द्रवसिहितो नर्मसचिवः, [सार्वविभक्तिकस्तसिः] निगलिते! शृङ्खलयोरैक्यान्निगडिते! द्रवसि [द्रु गतौ] वत्सस्य गमन-प्रयासि उपयाचनाय अपराधादिति कश्चिदुपहसति; यथा—मया प्रेमणा बद्धाऽपि त्वं मां परित्यज्य कान्तोत्सुकयासि; ("द्रवो विद्रवनर्म्मणोः। पावके शरलोच" इति

किमेषा ?। स्तबकस्तव कर्णतः पतितोऽयं सुरेखे !। सुरयार्चिता सुरयार्चितश्रीस्त्वमसि मत्ता। कलहे ! कलहंसकाञ्चीदामक्वणितैः स्मरमिवाह्वयसि। मलये ! मलयेप्सितं हृद्येवाधिगताऽसि। कलिके ! कलिकेतुमिमां मुखरां मुञ्च मेखलां, शृणुमः कलवल्लकीरुतम्। मेखला मे खला न भवति, त्वमेव मुखरतया मुखरतया च। त्वपतेऽत्र पतदियमवन्तिसेना कुसुमोपहारे

हैम: ) यद्वा—निगलिते ! एतदभिधाने ! द्रवसिद्धितो द्रावकौषधिविशेषात्, द्रवसि । "यद्यप्यष्टगुणः स्मरो निगदितः पुंसोऽङ्गनानां सदा नो याति द्रवतां तथाऽपि झटिति व्यायासिता सङ्गमे। तत् स्याद्दिव्यसम्प्रयोगविधिना सङ्कल्पतो द्रावणम् ॥" इति रामदेवः। यथोक्तं द्रवतीति तां लक्ष्यीकृत्याऽन्या प्रत्याह, एषा पुरोवर्त्तिनी, चपला चपलाभिधाना, किं चपलेव विद्युदिव, आचरति ? नास्यैव गतार्थत्वादिति भाव: ; यद्वा—एषा चपला चञ्चला, किमाचरति, पलायते ; [ इण् गतौ "उपसर्गस्यायतौ" इति लत्वं परारेफश्च ] यद्वा—चपलेव पिप्पलीव, आचरति, इयमेवौषधः सर्वथा द्रवतीति भाव:। ( "चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च" इति विश्वप्रकाश इति दिक् ) । हे सुरेखे ! तव कर्णतः स्तबकः पुष्पगुच्छः, अयं पतितः, त्वं न जानासि ? मत्ताऽसि ? इत्युपहासः। ( "स्याद्गुच्छकस्तु स्तबकः" इत्यमरः )। एनामेवोपहसति, सुरैर्देवैः, याचिता अर्थात् प्रार्थ्य अर्चिता योग्या, श्रीः सौन्दर्यशोभा यस्यास्तादृशी त्वं, सुरया मदिरया, चिता व्याप्ता तादृशी सती, मत्ताऽसि। हे कलहे ! कलहंसकाञ्चीदामक्वणितैः स्मरनाह्वयसीवाकारयसीव, पत्यतिरिक्तपुरुषाह्वानीत्प्रेक्षणमुपहासाय। एनामुपहसति, मलये ! तन्नामिके ! मे शिवे, लयो नाशो यस्य मलयः कामः, तदभीप्सितं हृद्य, हृद्येव हृद्यांश, अधिगताऽसि, स्व पुरुषं कटाक्षैरामन्त्रयसीति भाव: ; ( "अभीष्टेऽभीप्सितं हृद्यम्" इत्यमरः ) यद्वा—मः शिवः, लयो गृहं यस्य मलयश्चन्द्रः, तस्येप्सितं हरिणः तं, हृद्येवाधिगताऽसि मृगलोचनाऽसीति भाव:, ( "मः शिवश्चन्द्रमा वेधाः" इत्यनेकार्थध्वनिमञ्जरी )। कलिके ! कलेः रतिकलहस्य, केतुं ध्वजं, यथा केतुना सेनादि द्योत्यते, एवमनया रतिकलहो द्योत्यते इति भाव:, मुखरां वाचालां, मेखलां काञ्चीं, मुञ्च, त्यागे फलमाह, कलमव्यक्तमधुरं च, तद्वल्लकीरुतं तत् शृणुमः। ( "कलिः स्यात् कलहे सूरे कलिरन्त्ययुगे युधि" इति विश्वप्रकाशः )। उत्तरयति, मे मम, मेखला काञ्ची, खला पिशुना, न भवति, मुखेन प्रेष्ठेन, रतं यातीति मुख-रतया ; यद्वा—मुखेन वात्स्यायनसूत्रोपायेन, रतं यातीति मुखरतया; त्वमेव, मुखर-

मुग्धा। तव कैतवैरलं, लवङ्गिके! वेपथुरेवाशयं व्यनक्ति। वहतीव हतीरनङ्गलेखे! स्मरसायकानां तव वपुरलसम्। पिहिता-ऽपि हिताय ते उत्कलिकामहोर्मिः। वदने वद नेत्रपेयकान्तौ किमुपमानमिन्दुरप्युपयाति। वसतीव सतीव्रते! तव हृदि कोऽपि शतधा शतधारसारा वाचस्त्वयानुभूताः। कुन्तलिके! करकाकरकालमेघखण्डतुलामयमुल्लसितोत्फुल्लमल्लिकामालभारी कुन्तलकलापः तव याति। केरलिके! पुरगोपुरगोचराः

---

तया वाचालतया, खलया। ("मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः" इति हैमः। "पिशुनो दुर्जनः खलः" इत्यमरः)। काचिदाह, मुग्धेयमवन्तिसेना त्वपते लज्जते, अत्र कुसुमोपहारे पतेत्। [सम्भावनायां लिङ्]। तां प्रत्याह, लवङ्गिके! कैतवैरलं कैतवसाध्यं नास्तीत्यर्थः, वेपथुरेव कम्प एव, तवाशयं व्यनक्ति सात्त्विकाविर्भावात् त्वमेव कम्पसे मां किं वृथा वदसि? इति भावः; "स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः॥" अनङ्गलेखे! तव वपुः [कर्तृ] स्मरसायकानां हतीर्हननानि, [हन् हिंसागत्योः क्तिन्] वहतीव अतो-ऽलसम्। उत्तरमाह, तेऽप्युत्कलिकामहोर्मिः पिहिता कृता, हिताय विरह-व्यथाविष्कारादर्शनात् ते हिताय कल्याणाय; यद्वा—उत्कलिकामहोर्मिः पिहिता-ऽपि हितवदाचरति हितायते; यद्वा—उत्कलिकामहोर्मिः पिहिताऽपि हि निश्चयेन, तायते लोकोपहासात् त्वां पालयतीत्यर्थः, [तायृ सन्तानपालनयोः] सन्तानः प्रबन्धः; यद्वा—पिहिताऽप्युत्कलिकामहोर्मिः [कर्मकर्तृ] तायते स्वयमेव विस्तृता भवति, हि प्रसिद्धौ; [तनु विस्तारे, तनोतेर्यक्यति विभाषात्वम्] यद्वा—उत्कलिकामहोर्मिः पिहिताऽपि हिता हृष्टा, [हि गतौ वृद्धौ च] चयते लोके गच्छति, प्रसृता भवति। हि नेत्रैः पेया कान्तिर्यस्य तस्मिन् वदने मुखे, किमिन्दुरुपमानमपि यातीति वद; पूर्वं त्वन्मुखमुपमानमिदानीमिन्दुरुपमानमपि यातीति सम्भावनं, मुखे विरहातिशयात् पाण्डुत्वाधिक्यद्योतनाय। उत्तरमाह, सतीनां व्रतमिव व्रतमस्यास्तत्सम्बोधनं, तव हृदये कोऽपि वसतीव, शतधा शतप्रकारेण, शतधारोऽशनिः, तत्सारा: वज्रकठोरा, तव वाचोऽनुभूताः। ("शत-कोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः" इत्यमरः)। कुन्तलिके! उल्लसितोत्-फुल्लमल्लिकामालभारी तवायं कुन्तलकलापः करकाणां वर्षोपलानाम्, आकरो

श्रूयन्ते गीतध्वनयः, किमिव कथयसि?। क्षणमीक्षणमीलना-दपि चटुलं चटुलम्पटं सखीजनमायासयसि मुरलिके!। स्तनता स्तनताडनेषु यत् सौख्य तल्लब्ध स्मरता स्मरतापनोदनं दयितेन दयितेन विमुक्ताऽसि किं मुह्यसि? महतो महतो हतमोहतमो दयितो दयितः स्मरति स्म रतिप्रियं तव कौशलम्। नवनिशानखराणां नखराणां व्रणाः स्मरजन्यां स्म रजन्यां कुरुते! न कुरुते रुजं किं ते?। लोचनाभ्यां

यः कालमेघखण्डः तस्य तुलां साम्यं याति प्राप्नोति, ("वर्षोपलस्तु करका" इत्यमरः) [मालभारीत्यत्र "इष्टकेषीकामालानाम्" इति ह्रस्वः]। पुरस्य गोपुरं द्वारं, तद्गोचरा गीतध्वनयः श्रूयन्ते, ["गोपुरं द्वारि पूर्द्वारि कैवर्तीमुस्तकेऽपि च" इति मेदिनी) किमिव कथयसि? किं वा गायसि? कथं वा कस्य कृते वेति किं कथयसि? सर्वैः स्पष्टतयैव ज्ञायते इति त्वदर्थमेवेत्युपहासः। हे मुरलिके! क्षणं ["कालाध्वनोरत्यन्तसंयोगे" द्वितीया] ईक्षणमीलनाद् दृष्टिमीलनात्, चटुलं चञ्चलं, कार्य्येऽनलसं, चटुलम्पटमपि प्रियवाक्यासक्तमपि, सखीजनमायासयसि त्वमपि विरहवेदनया मूर्च्छिताऽस्मान् वेदयसीति भावः। दयितेनाभीष्टेन, स्तनता ध्वनितं कुर्वता, सङ्केतार्थं पत्न्यादिशब्दं कुर्वता वा, स्तनमर्दनेषु सुरते चन्द्रकलानुरोधप्राप्तेषु, यत् स्मरतापनोदनं स्मरतापनाशकं, सौख्यं लब्धं तत् स्मरताऽपि दयितेन पत्या, विमुक्ताऽसि। ("दयितः स्वामिकान्तयोः" इति धरणिः) एतादृशेनापीदृशेन मुक्ता-ऽसीति को वेद तवापराधमिति ध्वनिः, अत एव वदति, किं मुह्यसि? युक्तमेव कृतं पत्येत्यभिप्रायः; यद्वा—समाश्वासयति, किं मुह्यसि? स त्वद्गुणासक्तस्त्वां न त्यक्ष्यति। पूर्वं वर्णितमपि गुणं तत्प्रत्ययार्थं पुनर्वर्णयति, महतो महीयसः, महतस्त्वदतिरूपात् महोत्सवात्, हतमोहतमः हतो यया कयाचिद्रतविधानरूपो मोहो यस्य सः, तमोऽतिशये तमप्, दयितः कान्तः, दयितः पतिः, रतौ सुरते, प्रियं तव कौशलं स्मरति स्म स्मृतवान्। ["लट् स्मे" इति भूते लट्]। हे कुरते! नवं निशानं निशितं, तेन खराणां नखराणां नखानां, व्रणः क्षतं, स्मरस्य जन्मो वधः रतिस्तस्यां रतौ, स्मरं जनयतीति [कर्मण्यण्। "जनिवध्योश्च" इति वृद्धिनिषेधः, ङीप्] तस्यां कामोद्दीपिकायां वा, रजन्यां रात्रौ, रुजं पीडां, किं ते न कुरुते स्म? [पूर्ववल्लट्। प्रायः तन्त्रे] यद्वा—स्मरेव जन्याः कामिनीप्यादिताः [illegible] रुजं; चन्द्रकलानुरोधेन

मनस्यहो ! भवनानामतिशायि सौन्दर्य्यम् । अहो ! शृङ्गार-कलाकेलिकौशलम् । तथा ह्ययं तत्काललीलावहलविरलविमल-मालवीदशनकान्तिकान्तिदन्तिदन्तघटितो मण्डपः, असावपि कनकशलाकाविनिर्मितयन्त्रपञ्जरसंयतः क्रीड़ाशुकः इत्यादि परिचिन्तयन् प्रविश्य व्याकरणेनेव सरक्तपादेन, भारतेनेव सुपर्वणा, रामायणेनेव सुन्दरकाण्डचारुणा, जङ्घायुगलेन विराजमानां, छन्दोविचितिमिव भ्राजमानतनुमध्यां, नक्षत्र-विद्यामिव गणनीयहस्तश्रवणां, न्यायस्थितिमिवोद्योतकर-स्वरूपां, बौद्धसङ्गतिमिवालङ्कारभूषिताम्, उपनिषदमिवानन्दा-त्मकमुद्योतयन्तीं, द्विजकुलस्थितिमिव चारुचरणां, विन्ध्यगिरि-

---

प्रविश्य वासवदत्तां ददर्शेत्यन्वयः। व्याकरणेनेव पाणिनिप्रोक्ताष्टाध्यायिरूपेणेव, "तेन रक्तं रागात्" इत्युपलक्षितः पादोऽध्यायतुरीयांशः, तत्सहितेन; पक्षे—रक्तपादेन लोहितचरणेन सह सरक्तपादं तेन। भारतेनेव सुपर्वणा शोभनपरिच्छेद-युतेन; पक्षे—सुपर्वणा शोभनग्रन्थियुतेन। ("ग्रन्थिर्ना पर्वपरुषी" इत्यमरः)। रामायणेनेव सुन्दरकाण्डेन चारुणा; पक्षे—सुन्दरकाण्डवच्चारुणा। ("काण्डं चावसरे बाणे नाले स्कन्धे च शाखिनाम्। स्तम्बे रहसि वर्गे च" इति धरणिः)। जङ्घायुगलेन विराजमानाम्। विन्ध्यगिरिश्रियमिव सुनितम्बां सुन्दरकटकाम्; ("कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः) पक्षे—शोभनकटिपश्चाद्भागां, ("पश्चान्नितम्बः स्त्रीकट्याः" इत्यमरः)। छन्दोविचितिमिव भ्राजमानतनुमध्यां, तनुमध्याभिधं छन्दः,—"त्यौ स्तस्तनुमध्या"; पक्षे—भ्राजमानं तनुमध्यं यस्याः। नक्षत्रविद्या ज्योतिःशास्त्रमिव, गणनीयं हस्तो हस्तर्क्षं, श्रवणं श्रवणर्क्षं च यत्र; पक्षे—गणनीयमत्युत्कृष्टतया हस्तश्रवणं यस्याः। न्यायस्थितिमिवोद्योतकर आचार्यो न्यायवार्त्तिककृत्, तत्स्वरूपां तदात्मिकाम्; विद्यातद्वतोरभेदविवक्षाऽत्र त्रिमुनिव्याकरणमितिवत्, भेदविवक्षायां तु—उद्योतकरेण स्वरूपं यस्याः; उक्तानुक्तदुरुक्तचिन्ताकृता वार्त्तिककृता स्वरूपं यथा प्रतिपादितरूपं, न तु खण्डितं भ्रष्टमित्यर्थः; पक्षे—उद्योतकरं प्रकाशकरं, स्वरूपं यस्याः, ("प्रकाशो द्योत आतपः" इत्यमरः)। बौद्धसङ्गतिमिवालङ्कारो धर्मकीर्त्तिकृतो ग्रन्थविशेषः, तेन भूषिताम्; पक्षे—अलङ्कारो भूषणं, तेन भूषिताम्। उपनिषदमिवैकमानन्द-मद्वितीयं ब्रह्मानन्दम्, उद्योतयन्तीम्; तदुक्तम्—"आनन्दो ब्रह्मणो रूपं तच्च मोक्षे

कथाया अवसरः, ततो लघुतरमेवाभिधीयते। त्वत्कृते याऽनया वेदनाऽनुभूता, सा यदि नभः पत्रायते, सागरो मेलानन्दायते, ब्रह्मायते लिपिकरः, भुजगराजायते कथकः, तदा किमपि कथमप्यनेकैर्युगसहस्रैरभिलिख्यते कथ्यते वा। त्वयाऽपि राज्यमुज्झितं, किं बहुना? आत्मा सङ्कटे समारोपित एव। एषाऽस्मत्स्वामिदुहिता पित्रा प्रभातप्रायायां रजन्यां यौवनातिक्रान्तिदोषशङ्किना हठेन विद्याधरचक्रवर्त्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्येति। अनयाऽप्यालोचितमद्य, यदि अभ्यर्हितं जनमादाय तमालिका नागच्छति, तदाऽवश्यमेव मया हुतवहे शयितव्यमिति। तदस्याः सुकृतवशेन महाभाग! इमां भूमिमनुप्राप्तः, तदत्र यत् साम्प्रतं, तत्र भवानेव प्रमाणम्" इत्युक्त्वा विरराम।

अथ कन्दर्पकेतुः सप्रश्रयमानन्दसागरलहरीभिराप्लुत इव,

---

पतिः पक्षीऽनेन वा" इति भरतः। त्वत्कृते त्वदर्थम्, अनया वासवदत्तया, या या वेदना अनुभूता सा सा यदि नभ आकाशः, पत्रवदाचरति पत्रायते, ["उपमानादाचारे" इति क्यङ्] अतिवैपुल्यार्थमिदमुक्तम्। सागरो मेलानन्दायते मसीपात्रायते, गाम्भीर्यार्थं चेदं, ("मेलानन्दो मसीपात्रम्" इति हारावली)। लिपिकरो लेखकः, ["दिवाविभा—" इति टः] ब्रह्मायते, चिरजीवितार्थमिदम्। कथको वक्ता, भुजङ्गराजायते भुजङ्गश्रेष्ठशेषायते, योगशास्त्रप्रवर्त्तकत्वेनान्तरभावाभिज्ञत्वार्थं, शब्दशास्त्रार्णवपारावारीणत्वेन बहुमुखत्वेन बहुधाऽभिप्रायाविष्कारकत्वार्थं, वैद्यकशास्त्राचार्यत्वेन विरहवेदनयाऽस्या इयमवस्था, न ज्वरादिजन्येति वक्तृतार्थं चेदम्; तथा चोक्तं—"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन। योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥" इति, तदा कथमप्यनेकैर्युगसहस्रैः कथ्यतेऽभिलिख्यते वा। सम्भावनाऽलङ्कारः, "सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये" इति लक्षणात्। त्वयेत्यादि। पाणिग्रहणं विवाहः। अनया वासवदत्तया, आलोचितं चिन्तितं, यदभ्यर्हितं श्लाघ्यं जनम्। हुतवहे वह्नौ, शयितव्यं प्रवेष्टव्यम्। महान् भागो भाग्यं यस्य तत्सम्बोधनं, ("भागो भाग्यैकदेशयोः" इति विश्वः)। साम्प्रतं युक्तम्। प्रमाणमुचितकर्त्तव्यतायामित्यर्थः।

अथ सखीनामश्रवणोत्तरमानन्दसागरलहरीभिराप्लुतः कन्दर्पकेतुः

भुवनत्रयराज्याभिषिक्त इव, भीतभीत इव, वासवदत्तया सह सम्मन्त्र्य मकरन्दं वार्त्ताऽन्वेषणाय तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागत्यभिमुखेन मनोजवनाम्ना तुरगेण तया सह नगरान्निर्जगाम।

क्रमेण च जाङ्गलकवलनाभिलाषमिलितनिःशङ्ककङ्ककुलसङ्कुलेन, अर्द्धदग्धचिताचक्रसिमसिमायमानविकटकटतृष्णाचटुलकटपूतनोत्तालवेतालरवभीषणेन, शूलशिखरारोपितशङ्कितवर्णकर्णनासिकच्छेद-रुधिरपटलपतित-भाङ्कारि-भ्रमराली-भार-भरितभूमिभागबीभत्सेन, कटाग्निदह्यमानापटुचटचटत्करोटी-

---

भीतभीत इवाननुभूतपुरुषसङ्गेयं मा कदाचिदुद्विग्ना भूत्, तथा सति रसभङ्गः स्यादिति सभय इवेत्यर्थः। सप्रश्रयं सविश्वासं, वासवदत्तया सम्मन्त्र्य सख्याः कामचारानुज्ञां विधाय तया सह रतिं कृत्वेत्यर्थः, सम्पूर्वो मन्त्रिः कामचारानुज्ञार्थकः। वार्त्ताऽन्वेषणाय मकरन्दं तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागतिर्वायुः, तदभिमुखेन; पक्षे—सदा सर्वदा, गत्यभिमुखेन मनोजवनाम्ना तुरगेण तथा वासवदत्तया सह, नगरान्निर्जगाम, दुर्गगमनादौ स्त्रीणामनधिकारात्, [ अत्र "सहयुक्तेऽप्रधाने" इत्यप्रधाने तृतीया ]।

क्रमेण श्मशानवाटेन निमेषमात्रादनेकशतयोजनं गत्वा विन्ध्याटवीं विवेशेत्यन्वयः। जाङ्गलकवलनाभिलाषेण मांसग्रासाभिलाषेण, मिलितं निःशङ्कं कङ्कानां पक्षिविशेषाणां, कुलं तेन सङ्कुलेन, ("जाङ्गलं जलदेशे स्याज्जाङ्गलं पिशितेऽपि च" इति विश्वः)। अर्द्धदग्धचिताचक्रे सिमसिमायमान एतादृक् शब्दविशिष्टः, विकटो भयानकः, कटो मृतशरीरं, तत्तृष्णाचटुलकटपूतनानामुत्तालवेतालानां रवेण भीषणेन, ("कटः समयबन्धेऽपि तृणेऽपि मृतकेऽपि च" इति विश्वः)। शूलशिखरारोपितस्य शङ्कितवर्णस्य चोरस्य, कर्णनासिकमिति [ प्राण्यङ्गत्वादेकवद्भावः ] तच्छेदरुधिरपटले कर्णनासिकच्छेदनिर्गतरुधिरपटले, पतिता भाङ्कारिभ्रमराल्यो भाङ्कारोऽव्यक्तशब्दः, तद्युक्ता भ्रमराल्यो मक्षिकाः, ताभिर्भरितम् [ इत्यजन्तो न तु क्तान्तः ] पूरितं, तादृग्भूमिभागेन बीभत्सेन, ("चोरः शङ्कितवर्णश्च कुम्भाख्यः प्रकीर्त्तितः" इत्युत्तरतन्त्रम्। "मत्सरा मक्षिका ज्ञेया भ्रमराली च सा मता" इति हारावली)।

टङ्कारभैरवरवेण, शूलपाणिनेव कपालावलिभस्माशिशावलिभूत-भुजगावबद्धदेहेन, पुरुषातिशयेनेवानेकमण्डलकृतसेवेन, श्मशान-वाटेन गत्वा निमेषमात्रादेवानेकशतयोजनं प्रलयकालवेलामिव समुदितार्कसमूहां, नागराजस्थितिमिवानन्तमूलां, सुधर्मामिव स्वच्छन्दस्थितकौशिकां, सत्पुरुषसेवामिव बहुश्रीफलाढ्यां, भारत-समरभूमिमिव दूरप्ररूढार्जुनां, पुलोमकुलस्थितिमिव सहस्र-नेत्रोचितेन्द्राणिकां, शूलपाणिचित्तवृत्तिमिव फलितगणिकारिकां, सज्जनसम्पदमिव विकसिताशोकसरलपुन्नागां, शिशुजनलीला-

---

जटाश्लिष्टचार्चिः, तेन टङ्कमानापट्टचटचटमूर्वरोटिसंगुप्तशिरोऽपि, तस्माट्टङ्कारेण भैरवरवेण भयानकशब्दविशिष्टेन, ("शिरोऽस्थनि करोटिः स्त्री" इत्यमरः)। शूलपाणिनेव शिवेनेव, कपालावलीत्यादि, शिवा गौरी, पक्षे—क्रोष्ट्री। पुरुषेऽतिशयो यस्य स महाराजः, तेनेवानेकमण्डलं राष्ट्रम्; पक्षे—श्वा, तत्कृतसेवेन। प्रलयकालवेलामिव समुदितोऽर्कसमूहः सूर्यसमूहो यस्याम्; पक्षे—अर्को वृक्षविशेषः, ("अर्काह्ववसुकास्फोट" इत्यमरः) "मदार" इति भाषायाम्। नागराजस्थितिमिवानन्तः शेषः, मूलमाधिकारणमस्याः; पक्षे—अनन्तानि मूलानि यस्याम्। सुधर्मामिव देवसभामिव, स्वच्छन्दं स्थितः कौशिक इन्द्रो यस्याम्; पक्षे—कौशिक उलूकः। सत्पुरुषसेवामिव बहुश्रीयुक्तैः फलैराढ्याम्; पक्षे—श्रीफलो बिल्वः। ("बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि" इत्यमरः)। भारतसमरभूमिमिव दूरप्ररूढोऽर्जुनः पार्थो यस्याम्; पक्षे—अर्जुनो वृक्षविशेषः। ("इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः)। पुलोमकुलस्थितिमिव सहस्रनेत्रायेन्द्राय, उचिता योग्या, इन्द्राणी शची यस्याम्; ["नद्यृतश्च" इति कप्] पक्षे—सहस्रनेत्रैः सहस्रमूलैः, उचिता योग्या, इन्द्राणी शतावरी। ("वाकधारा महेन्द्राणी मकाणी अश्ववादिनी" इति रभसः)। शूलपाणी वेश्यापाणी वेश्यिको वा, तच्चित्तवृत्तिमिव फलिता सफला, वेश्येभ्यो धनलाभात् सुरतसुखलाभाद्वा, गणिकानां वेश्यानाम्, कारिका यातनिवारकं वा यस्यास्ताम्; [ऋ गतौ धातोर्निर्देशे ण्वुल्, इत्वम्। कर्मान्तरे चाक्पूर्वः। "प्रत्ययस्थात्—" इतीत्वम्:] पक्षे—गणिकारिका वृक्षविशेषः, ("श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका" इत्यमरः) अरणी इति प्रसिद्धः। सज्जनसम्पदमिव विकसिता हृष्टाः, अशोकाः शोकरहिताः, सरला उदाराः, पुरुषा नागा इव पुन्नागाः पुरुषश्रेष्ठा यस्यां [illegible]

मिव कृतधात्रीधृतिं, क्वचिद्राघवचित्तवृत्तिमिव वैदेहीमयीं, क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणामृतां, क्वचिन्नारायणशक्तिमिव स्वच्छन्दापराजितां, क्वचिद्वाल्मीकिसरस्वतीमिव दर्शितेक्ष्वाकुवंशां, लङ्कामिव बहुपलाशसेवितां, कुरुसेनामिवार्जुनशरनिकरपरिवारितां, नारायणमूर्त्तिमिव बहुरूपां, सुग्रीवसेनामिव पनसचन्दनकुमुदनलसेविताम्, अविधवामिव सिन्दूरतिलकभूषितां प्रवालाभरणां च, कुरुसेनामिवोलूकद्रोण-

---

वा ताम्; ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥" इत्यमरः) पक्षे—विकसिताः फुल्लाः, अशोकाः सरलाः पुन्नागाश्च यस्यां तां, ("पीतद्रुः सरलः पूतिकाष्ठम्"। "पुन्नागः पुरुषस्तुङ्गः केसरो देववल्लभः" इति द्वयोरप्यमरः)। त्रिभुवनलीलामिव कृता धात्र्याः उपमातुः, धृतिर्यस्याः; पक्षे—धात्री आमलकी। राघवो रामचन्द्रः, तच्चित्तवृत्तिमिव वैदेहीमयीं सीतामयीम्; पक्षे—वैदेही पिप्पली, ("वैदेही रोचना सीता वणिक्स्त्रीपिप्पलीष्वपि" इति विश्वप्रकाशः)। क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणममृतं यस्यां ताम्; पक्षे—अमृता गुडूची, ("गुडूची तन्त्रिकाऽमृता" इत्यमरः)। क्वचिन्नारायणशक्तिमिव स्वच्छन्दा स्ववशा, अपराजिता पराजयरहिता ताम्; पक्षे—स्वच्छन्दा निरर्गलप्रसृता, अपराजिता विष्णुक्रान्ता, ("विष्णुक्रान्ताऽपराजिता" इत्यमरः)। वाल्मीकिसरस्वतीमिव दर्शित इक्ष्वाकोः राज्ञः, वंशः सन्ततिर्यस्यां ताम्; पक्षे—("इक्ष्वाकुः कटुतुम्बी स्यात्" इत्यमरः)। लङ्कामिव बहुपलाशैः राक्षसैः सेविताम्; पक्षे—पलाशो वृक्षः। कुरुसेनामिवार्जुनशरनिकरैः परिवारिताम्; पक्षे—अर्जुनशरौ वृक्षविशेषौ, तयोर्निकरैः परिवारिताम्। नारायणमूर्त्तिमिव बहुरूपामनेकस्वरूपाम्; पक्षे—बहुरूपां बहुपशुकां, ("रूपं तु श्लोकशब्दयोः। पशावाकारे सौन्दर्ये नाणके नाटकादिके॥ ग्रन्थावृत्तौ स्वभावे च" इति हैमः)। सुग्रीवसेनामिव पनसचन्दनकुमुदनलैस्तदभिधानैर्वानरैः, सेविताम्; पक्षे—पनसचन्दनौ वृक्षौ, कुमुदं पुष्पं, ("पनसः कण्टकिफले कण्टके कपिभिदोः"। "चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यात्"। "कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ। दैत्यान्तरे च दिङ्नागयोगयोरपि कीर्त्तितः॥" इति त्रिष्वपि विश्वप्रकाशः)। अविधवामिव सिन्दूरस्य तिलकेन भूषिताम्; पक्षे—सिन्दूरतिलकौ वृक्षविशेषौ, ("सिन्दूरो वृक्षभेदे स्यात्

क्रमेण च कालकैवर्त्तेन तिमिराऽऽनायं प्रक्षिप्य गगनमहासरसि सजीवशफरीनिकरे इवापक्रियमाणे तारागणे, रक्तांशुकपटे, विषमप्ररूढबिसलताग्रग्रन्थिकानुगतशतपत्रपुस्तकसनाथे, मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकरसान्द्रमन्द्रमञ्जुस्वनैः स्वधर्ममिव पठति विकचकमलाकरभिक्षौ, कपीबलेनेव कालेन तिमिरबीजेष्विव मधुकरेषु कुमुदवेलेषु मधुरसकर्दमितपरागपङ्केषु घनबद्धमानदलेषु भ्रमरेषु व्याजात् पङ्के उप्यमानेषु, रजोमुर्मुरसनाथमधुकरपटलानुगतोद्दण्डपुण्डरीकव्याजाद्धूपघटकमिव भगवते किरणमालिने प्रयच्छन्त्यां कमलिन्यां, रजनीवधूकरतलद्वयोच्छालित-पतत्प्रभात-मुसलाहति-क्षतान्तरे उलूखले इव चन्द्रे कण्डनकीर्णेष्विव तण्डुलेषु तारागणेषु मौलत्सु, सन्ध्याताम्रमुखेनेव वासरवानरेण नभस्तरुमारोहता शाखाभ्य इव कम्पिताभ्यो दिग्भ्यो विकचप्रसूने

---

क्रमेणोत्तानिक्षिप्यमाणेषु तारादिषु कन्दर्पकेतुर्वासवदत्तया सह कलाग्रहे सुष्वापेत्यन्वयः। कालेत्यादि।—कैवर्त्तो धीवरः, आनायो जालं, ("कैवर्त्ते दाशधीवरौ"। "आनायः पुंसि जालं स्यात्" इति द्वयोरप्यमरः)। रक्तांशवः एव रक्तांशुकाः, [स्वार्थे कन्] त एव पटा यस्य तस्मिन्; रक्तांशुकं रक्तवस्त्रं, पटो वसनं यस्येति च। विषमप्ररूढबिसलतैव ग्रन्थिकं तालपत्रीस्थपुस्तकमध्यसूत्रम्, तेनानुगतं शतपत्रं कुशेशयं, तदेव पुस्तकं तेन सनाथे, "बस्ता" इति भाषायाम्। मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकराणां मन्द्रैर्गम्भीरैः, मञ्जुस्वनैः स्वधर्मं पठतीव विकचे विकसितेऽपि विकासिते च, कमलाकरभिक्षौ, ("मन्द्रस्तु गम्भीरे" इति स्वरप्रकरणेऽमरः। "शतपत्रं कुशेशयम्" इति कमलप्रकरणे च)। कपीबलेनेत्यादि।—कपीबलः कर्षकः, ("कर्षकश्च कृषीवलः" इत्यमरः) उप्यमानेषु [टुवप् बीजसन्ताने]। रजोमुर्मुरेत्यादि।—किरणमालिने सूर्याय। रजनीत्यादि।—आहतिराघातः, क्षतान्तरे खण्डितमध्यभागे, नायं कलङ्कः, किन्तु मुसलाघातजन्मा व्रण एव दृश्यते इति द्योतनाय कलङ्कस्वरूपवर्णनं, कण्डनेत्यादि। सन्ध्येत्यादि।—सन्ध्येव प्रातःसन्ध्येव, [illegible] ताम्रं मुखं यस्य तादृशेन वासरवानरेण, [illegible]

इव तारागणे चन्द्रमण्डले फले च निपतति, तारागणशालितण्डुलशबलनभोऽङ्गणं स्फुरदरुणतरुणचूडाचारुवदने वासरकुक्कवाकौ चरितुमवतरति, मत्ताङ्गतिप्रबुद्धो वारुणीसमागमात् द्विजपतिरेव पतिष्यतीति हसन्त्यामिवाखण्डलककुभि, अरुणकेसरिकराघातनिहतान्धकारकरीन्द्ररुधिरधाराभिरिव, उदयगिरि-शिखर-निर्झर-धौतधातु-धाराभिरिव, तुङ्गतुरङ्गखरखुरपुटपाटितपद्मरागच्छटाभिरिव, केसरिकरतलाहतमत्तमातङ्गोत्तमाङ्गसङ्गलदस्रप्रसारिणीभिरिव, उदयाचलकूटकोटिप्ररूढजपाकुसुमकान्तिभिरिव, त्रिभुवनकार्य्यसम्पादकप्रभानुरागरसैरिव रक्तमण्डले, ताराकुमुदग्रहणाय प्रसारितहस्ते एव कुङ्कुमरागारुणे प्राचीविलासिन्याः, पूर्वाचलभोगीन्द्रफणोपले, गगनेन्द्रनीलतरुकनककिसलये, नभोमगरप्राचीरकनककुम्भे,

---

अन्यशालीयमिश्रतये। स्फुरदरुण एव सूर्य्यसारथिरिव, तरुणचूडा तया चारुवदने, स्फुरन्त्यारुणया रक्तया, तरुणचूडया चारुवदने कुक्कवाकौ चरितुं भक्षणार्थं, तारागण एव शालितण्डुलं तेन शबलं नभोऽङ्गणमवतरति, [मेघा वर्षन्तीतिवत् प्रतिक्षेपरतेः कर्म नोपात्तम्]। मत्ताङ्गतेः प्रबुद्ध एव द्विजराजश्चन्द्रः, वारुणी पश्चिमदिक्, तत्सङ्गमात् पतिष्यति इति हसन्त्यामिवाखण्डलककुभि पूर्वदिशि, मया सह यदा सङ्गतस्तदोभयोः समवयस्कताऽऽसीत्, इदानीं त्वपराङ्गना उपभुक्ताऽपि प्रथयस्याऽऽसीदयमपि कान्तस्तथा चाभवाराऽस्योत्सुक्यादापतिष्यतीति भावः, तथा च यस्सुखशोभान्या परित्यज्य यातस्तत् सुखं नाप्स्यतीत्युपहासः, उक्तं चान्यत्र—"बालोपभुक्ता बलमादधाति पतिं सुखाङ्गं तरुणी करोति। प्रौढा जरां निश्चितमेव सूते वृद्धा नितान्तं बलवीर्य्यहानिम्॥" इति; द्विजराजो ब्राह्मणश्रेष्ठः, वारुणी मदिरा, पतिष्यति व्रात्यत्वमेष्यति। रक्तमण्डलेऽरुणमण्डले, भास्करे उदयमारोहतीत्यन्वयः। करीन्द्रेत्यादि। धातुर्गैरिकः। पद्मरागो मणिः। अस्रं रुधिरं, ("रुधिरेऽसृग्लोहितास्र" इत्यमरः। "प्रसारिणी प्रणालिका" इति हारावली)। कूटः शृङ्गम्। अनुरागो लोकानां प्रीतिः। ताराकुमुदेत्यादि। फणोपले फणाकरके। गगनमाकाशमेव, इन्द्रनीलतरुस्तस्य कनककिसलये स्वर्णपल्लवे; राजभवनादौ निर्मितं [illegible]

तमलोकलुम्भाकारे, प्राचीललाटतटकुसुम्भाम्बुविन्दौ, सन्ध्या-
वनलतैककुसुमे, मञ्जिष्ठारक्तपट्टसूत्रसदृशे, सन्ध्यारागगुणगुम्फिते,
प्राचीकाञ्चनदीनारचक्रे इव, वासरविद्याधरसिद्धगुटिके
इव, धातुरागारुणदिग्गजपादतलानुकारिणि विभावरीतिमिर-
तस्करे भास्करे उदयमारोहति, माञ्जिष्ठचामरे इव दिग्गजेषु,
महाभारतसमरभूमिरुधिरोद्गारे इव कुरुक्षेत्रेषु, सुरराजशरा-
सनकान्तिलेपे इव जलदच्छेदेषु, काषायपटे इव शाक्याश्रममठि-
कासु, कौसुम्भरागे इव ध्वजपटपल्लवेषु, फलपाके इव कर्कन्धूषु,
कुङ्कुमच्छटारसे इव व्योममहासौधाङ्गणस्य, सञ्चरदरुणजव-
निकापटे इव कालनर्त्तकस्य, बालप्रवालभङ्गारुणे प्रसरति बाला-
तपे, क्षणेन च चाटुचटुलचक्रवाकहृदयशोकसन्तापहरणादिव,
दहनसमर्पिततेजःप्रवेशादिव, दिननाथकान्तोपलानलसङ्गादिव,
उष्णिमानमुष्णरश्मेराश्रयति रश्मिसञ्चये कन्दर्पकेतुः सर्व-
रात्रजागरणपरवशाहारशून्यशरीरतया निश्चेतनोऽनेकयोजनशत-
भ्रमणखिन्नो वासवदत्तयाऽप्येवंविधया सह लतागृहे मन्द-
मारुतान्दोलितकुसुमपरिमललुब्धमुग्धपरिभ्रमद्भ्रमरझङ्कारमनो-
हरे तत्कालागतया निद्रया गृहीतो निःस्पन्दकरणग्रामः सुष्वाप ।

तव रेखागमयन्त्यायात् तरुणा । नभ इत्यादि ।—प्राचीरं नगरप्रान्ते काष्ठकादिवेष्टनं, ("प्राचीरं प्रान्ततो वृतिः" इत्यमरः) । प्राचीललाटतटे कुसुम्भाम्बुविन्दौ महारजन-जलविन्दौ, ("स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि" इत्यमरः) । दीनारचक्रं निष्कचक्रं, ("दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः) । तस्करे मोषके, ("दस्युतस्कर-मोषकाः" इत्यमरः) । एतादृशे बालातपे प्रसरति । दिग्गजकपोले माञ्जिष्ठं मञ्जिष्ठा-रक्तं, चामरमिव, ["तेन रक्तम्" इत्यण्] । सुरराजशरासनमिन्द्रधनुः । काषायं कषायरक्तम् । शाक्यो बौद्धभेदः । मठिका "मढी" इति भाषायाम् । कर्कन्धूर्बदरी, ("कर्कन्धूर्बदरी कोली" इत्यमरः) । जवनिका तिरस्करिणी, ("प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा" इत्यमरः) । प्रवालो विद्रुमः । क्षणेन चोष्णरश्मेः सूर्यस्य, रश्मिसमूह उष्णिमानमाश्रयतीत्यन्वयः । दिननाथकान्तोपलं सूर्यकान्तमणिः । निःस्पन्दकरणग्रामः स्वस्वविषयग्रहणासमर्थेन्द्रियवर्गः ।

ततो वणिजीव प्रसारिताम्बरे, महादावानले इव सकलकाष्ठोद्दीपिनि पतङ्गमण्डले मध्यन्दिनमारूढे कथमपि कन्दर्पकेतुः प्रियया विनाकृतं लतागृहमवलोक्योत्थाय च तत इतो दत्तदृष्टिः क्षणं विटपेषु, क्षणं लताऽन्तरेषु, क्षणमन्धकूपेषु, क्षणं शुष्कपर्णराशिषु, क्षणं तरुशिखरेषु, क्षणमाकाशे, क्षणं दिक्षु विदिक्षु च भ्रमन्ननवरतविरहानलदह्यमानहृदयो विललाप —"प्रिये! वासवदत्ते! देहि मे दर्शनं, किं परिहासेनान्तरिताऽसि? त्वत्कृते यानि मया दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणम्। हा प्रिय! मकरन्द! पश्य मे दैवदुर्विलसितं, किं मया न कृतमवदातं कर्म? अहो! दुर्विपाका नियतिः, अहो! दुरतिक्रमा कालगतिः, अहो! ग्रहाणा-

---

तत उभयोर्निर्देशोत्तरम्। पतङ्गमण्डले सूर्य्यमण्डले, नभोमध्यमारूढे सतीत्यन्वयः। वणिजीव प्रसारिताम्बरे प्रसारितवस्त्रे; पक्षे—अम्बरमाकाशम्। काष्ठमिन्धनं, काष्ठा दिक्, दीपिनि प्रकाशके दाहके च, ("पतङ्गौ पक्षिसूर्य्यौ च"। "अम्बरं व्योमवाससी" इत्युभयत्राप्यमरः)। अथ कन्दर्पकेतुर्दैवेनेति कर्तृपदमध्याहार्य्यम्। प्रियया विनाकृतं लतागृहमवलोक्य विललापेत्यन्वयः, [विनायोगे "पृथग्विनानानाभिः" इति तृतीया]। विरहादुन्मादं वर्णयति। परिहासार्थमन्तर्हिता स्यादिति। क्षणं विटपेषु शाखाविस्तारेषु, क्षणं लतान्तरेष्वन्विष्यन्, तत्र तामनुपलभ्य शङ्कते, ननु नेयं परिहासेनान्तरिता पूर्वं, मया नेयं विप्रलब्धा, सम्यङ् मदाशयानभिज्ञा शुभ्रपात्तां श्रान्ता तादृशानुरागा सेयं शिरीषमृदङ्गी भीषणे प्रदेशे कथं मां परित्यज्य यास्यतीति। मानुषोचिताहृस्वरूपानुपलम्भान्नागकन्येति केनचिन्नागेन वा न नीता स्यादिति क्षणमन्धकूपेषु। क्षणं शुष्कपर्णराशिषु शाखाभृत्युयोगात् तादृशोऽवस्था वा तत्रैव एवापगतजीविता भीरुत्वेन प्रथमस्थाने एव परित्यक्ता स्यात्। अत्युत्सुकया केनचिद्दिव्यधारिणा विद्याधरादिना वा अपहृता स्यादिति क्षणं तरुशिखरेषु, क्षणमाकाशे, क्षणं दिक्षु विदिक्षु च। कुत्राप्यनुपलम्भादनवरतविरहानलदह्यमानहृदयः अत एवापगततर्कः आह, प्रिये! इत्यादि।—दैवदुर्विलसितं भाग्यदुर्विपाकम्। अवदातं शुद्धं, [दैप् शोधने, कर्मणि क्तः] ("अवदातं तु विमले मनोज्ञे सितपीतयोः" इति हैमः)। अहो! नियतिर्नियतिः, दुर्विपाका, ("दैवं दिष्टं भागधेयं भाग्यं स्त्री

मतिकटुकटाक्षनिरीक्षणम्, अहो! विसदृशफलता गुरुजनाशिषाम्, अहो! दुःस्वप्नानां दुर्निमित्तानां च फलितं, सर्वथा न कश्चिदगोचरो भवितव्यतानां, किं न सम्यगागमिता विद्याः? किं न यथावदाराधिता गुरवः? नोपासिता वह्नयः? किमधिक्षिप्ता भूदेवाः? किं न प्रदक्षिणीकृताः सुरभयः? किं न कृतं शरणेष्वभयम्?" इति बहुविधं विलपन् दक्षिणेन काननं निर्गत्य नलनडनलदनलिनीनिचुलपिचुलविदुलबकुलेन, प्रचुरचिरबिल्वबिल्वाटजकुटजकदम्बोपकण्ठेन, सोत्कण्ठ-

---

नियतिर्विधिः" इत्यमरः) दैवनियत्योः पर्यायतया पुनरुक्तिरियं वैचित्र्येण। कष्टगतिः दुःखेनातिक्रमो यस्याः। कटु क्रूरम्। गुरुजनाशिषामाशाम् परित्यज्य यातोऽपि सुकृतिभोग्यान् भोगान् लभस्वेत्येवंरूपाणाम्; स्पष्टा चेयं रीतिरर्जुनदाराणामभिमन्युविलापे महाभारते; विसदृशफलता। दुःस्वप्नानामित्यादि। भवितव्यतानां शुभमशुभं वा नागोचरो नाविषयः, तथा च भवभूतिः,—"प्रायः शुभं च विदधात्यशुभं च जन्तोः सर्वंकषा भगवती भवितव्यतैव" इति। किं विद्या ज्योतिर्नीतिप्रमुखाः, न सम्यगागमिताः? न सम्यक् परिशीलिताः? यदाचाभ्यां दुर्मुहूर्ते प्रस्थितं नीतिविरुद्धं चाव स्थितमिति भावः। यथावत् यथाशास्त्रम्; छन्दमयेऽप्यनयवान्वेति। किं भूदेवा द्विजाः, अधिक्षिप्ताः? तिरस्कृताः? तदुक्तम्—"शतमोघ मतायुश्च ब्राह्मणान् द्वेष्टि भारत" इति; तेन किं वा ममेयमवस्था? इति भावः, ("अग्रजन्मभूदेववाडवाः" इत्यमरः)। किं सुरभयो गावः, न प्रदक्षिणीकृताः? यथेन्द्रमुपस्थाय तुषातां सुदक्षिणां धृत्वा सत्वरो दिलीपो मार्गस्थां धेनुमप्रदक्षिणीकृत्यैव यातस्तथा मतः, एवमहमपि किं गोभिः शप्तः? इति भावः। किं शरणेषु शरणागतेषु, अभयं न कृतम्? येन मामपि कश्चित् प्रियादानेन विरहानलान्न त्रायते इति भावः। [दक्षिणेनेत्येनबन्तम्] काननमित्यत्र ["एनपा द्वितीया" इति द्वितीया]। निर्गत्य वनोपान्तेन कतिपयदूरं गत्वा जलनिधिमपश्यदित्यन्वयः। नला नडा धमनाः, नलदान्यभयानि, नलिन्यः पद्मिन्यः, निचुलाः हिज्जलाः, पिचुला झावुकाः, विदुलाः परिव्याधाः, बकुलाः केसरा यत्र तेन। ("नडस्तु धमनः", "नरकट" इति ख्यातम्। "उशीरमस्त्रियाम्। अभयं नलदम्", "खस्" इति ख्यातम्। "नलिनीपद्मिनीमुखाः"। "समौ पिचुलझावुकौ", "झाउ" इति ख्यातम्। "द्वौ परिव्याधविदुलौ",

भृङ्गराजरसितसुन्दरसुन्दरीवनेन, वितत वेत्रव्रततिव्रातावरण-तरुणतरुस्कन्धसम्बद्धभृङ्गरोलेन, गोलाङ्गूलभग्नगलन्मधुच्छत्र-मधुपटलरसासारसिक्ततलेन, तालहिन्तालपूगपुन्नागकेसर-घनेन, घनसारमल्लिकाकेतककोविदारमन्दारबीजपूरजम्बीर-जम्बूगुल्मगहनेन, अप्रत्यूहदात्यूहकुहरितभरितनदीनल-

---

"वेत" इति ख्यातम । "अथ केसरे बकुलः", "मौरसरी" इति ख्यातम् । "निचुलो हिज्जलोऽम्बुजः", "समुद्रफल" इति ख्यातम् । "अमृतफल" इति ख्यातम इत्यन्ये । इति सममप्यमरः ) । प्रचुरैश्चिरबिल्वैः करञ्जैः, बिल्वैः शैलूषैः, कुटजैः पर्णमयैर्मुनिगृहैः, कुटजैर्वृक्षभेदैः, कण्ठोपकण्ठेन, ("चिरबिल्वो नक्तमालः करजश्च करञ्जके" । "मुनीनां तु पर्णशालोटजोऽस्त्रियाम्" इति द्वयोरप्यमरः । "कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि" इति विश्वप्रकाशः, "कोरया" इति भाषायाम् ) । सोत्कण्ठभृङ्गराजरसितेन सुन्दरं सुन्दरीवनं यत्र तेन, ("सुन्दरी तरुभिन्नारी-भिदोः स्त्री रुचिरेऽन्यवत्" । "भृङ्गराजस्तु विज्ञेय औषधौ पक्षिभेदके" इति धरणिः ) । विततानां वेत्रव्रततीनां व्रातो व्यूहः, आवरणं येषां तादृशास्तरुणा नवीनाः, बहुपाश्रितशाखाः, तेषां स्कन्धे सम्बद्धा भृङ्गरोलाः कीटाः पक्षिणो भ्रमरा वा यत्र तेन, ("वल्ली तु व्रततिर्लता" । "वरणो वरुणः सेतुस्तिक्तशाकः" इति द्वयोरप्यमरः । "भृङ्गरोलः पक्षिभेदे कीटभेदे च षट्पदे" इति धरणिः ) । गोलाङ्गूलेत्यादि ।—गोलाङ्गूलो वानरः, ("गोलाङ्गूलः प्लवङ्गश्च कीशः शाखामृगः कपिः" इत्युत्पलिनी ) । तालस्तृणराजः, हिन्तालो हीनोऽल्पस्तालो हिन्तालः, [ पृषोदरादिः ] पूगः क्रमुकः, पुन्नागो देववल्लभः, केसरो नागकेसरः, तैर्घनेन, ("तृणराजाह्वयस्तालः", "ताड़" इति ख्यातम् । "पूगः क्रमुको गुवाकः", "सुपारी" इति ख्यातम् । "पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः", गुर्जरदेशे "देवरा" इति ख्यातम, इति विश्वप्यमरः । "केसरो नागकेसरः" इति हैमः ) । घनसारो वृक्षभेदः कुष्माण्डको वा, मल्लिका हंसाः तृणशून्यं वा, केतकं, कोविदारो युगपत्रकः, मन्दारोऽर्कः पारिजातको वा, बीजपूरः फलपूरः, जम्बीरो मरुवकः, जम्बूः, गुल्माः स्तम्बाः, तैर्गहनेन, ("कुष्माण्डकः पुष्पफलो घनसारः" इति हारावली । "घनसारस्तु कर्पूरे दक्षिणावर्तपारदे" इति हैमः । "मल्लिको हंसभेदे स्यात् तृणशून्ये तु मल्लिका" इति रुद्रः । "कोविदारे चमरिकः कुद्दालो युगपत्रकः", "कचनार" इति ख्यातम् । "गन्धर्वविकीरणाः मन्दरश्च", "मदार" इति ख्यातम् । "मन्दारः पारिजातकः", "फरहद्" इति ख्यातम् ।

निकुञ्जेन, पुञ्जिताकुण्ठकण्ठकलकण्ठाध्यासितोद्दामसहकार-पल्लवेन, चपलकुलायकुक्कुटकुटुम्बसंवाहितोत्कटविटपेन, कोरक-निकुरम्बरोमाञ्चितकुरबकराजिना, रक्ताशोकपल्लवलावण्यलिप्य-मानदशदिशा, प्रविकसितकेसररजोविसरधूसरिमभरेण, पराग-पिञ्जरमञ्जरीमुह्यमानमधुकरमण्डलशिञ्जितजनितजनमुदा, मद-जलसेचकितमुचुकुन्दस्कन्धकाण्डकथ्यमानानि:शङ्ककरिकटविकट-कण्डूतिना, कतिपयदिवसप्रसूतकुक्कुटीकुटीरीकृतकुटजकोटरेण, चटकसञ्चार्य्यमाणचटुलवाचाटचाटकैरक्रियमाणचाटुना, सह-चरीचारणचुञ्चुचतुरचकोरचुञ्चुना, शैलेयसुकुमारतरशिलातल-सुखशयितशशकशिशुना, शेफालिकाशिफाविवरविस्रब्धविवर्त्त-मानगौधेरराशिना, निरातङ्करङ्कुणा, निराकुलनकुलकुल-

---

"मन्दारः पारिजातकः। पञ्चैते देवतरवः" इति देवतवर्गः। "फलपूरो बीजपूरः", "बिजौरा" इति ख्यातम्। "मरुवकः प्रस्थपुष्पः फणिज्झकः। जम्बीरोऽपि", "मरुवा" इति ख्यातम्। "सपकाण्डे स्तवगुञ्जो" इति चाप्यमरः)। अप्रत्यूह इत्यादि।—प्रत्यूहो विघ्नः। पुञ्जीकृतेनाकुण्ठकण्ठः कलकण्ठः कोकिलः, तेनाध्यासिता उद्दामसहकारपल्लवा यत्र तेन। चपलेन कुलायकुक्कुटकुटुम्बेन संवाहितो मर्दितः, उत्कटविटपी यत्र तेन। कोरकेत्यादि।—निकुरम्बं समूहः, कुरबको रक्तमहा-सहा, "लाल कटसैरैया" इति भाषायाम्। विसरः समूहः। मुचकुन्दो वृक्षभेदः, ("मुचकुन्दो वृक्षभेदे मुनिदैत्यविशेषयोः" इति विश्वः)। कटः गण्डस्थलः। कतिपयदिनप्रसूतकुक्कुट्या कुटीरीकृतं कुटजकोटरं निष्कुहो यत्र तेन। चटकः कलविङ्कः, ("चटकः कलविङ्कः स्यात्"। "पुमपत्ये चाटकेरः" इति द्वयोरप्यमरः)। [चटकाया ऐरक्] वाचाटो बहुभाषी, ["आलजाटचौ बहुभाषिणि" इत्याटच्]। सहचरीणां सञ्चारणेषु चुञ्चुभिर्वित्तैः, चतुरचकोरैः पक्षिभिः, चुञ्चुना वित्तेन, ["तेन वित्तश्चुञ्चुप्चणपौ"]। शैलेयं ("कालानुसार्य्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्" इत्यमरः)। शेफालिका सुवहा, ("शेफालिका तु सुवहा" इत्यमरः, "निवारी" इति ख्यातम्। "शिफा जटायां सरिति मांसिकायां च मातरि" इति विश्वप्रकाशः) गौधेरः ["गोधाया ढ्रक्" इति ढ्रगन्तः] ("अथो गौधेरगौधार-गौधेया गोधिका-त्मजे" इत्यमरः, "गोह" इति ख्यातम्)। राशिः समूहः, ("आशिकायः पुञ्जराशी"

केशिना, कलकोकिलकुलकवलितसहकारकलिकोद्गमेन, सङ्कारारामरोमन्थायमानचमरीयूथेन, अवगाहारिसलीलगिरिनितम्ब-निर्झर-निनाद-निद्राण-मन्दायमान-करिकुल-कर्णताल-दुन्दुभिना, समासन्नकिन्नरीगीतरवरज्यमानरुरुविसरेण, अतहरितहरिद्राद्रवरज्यमानवराहपीनपोत्रपालिना, गुञ्जापुञ्जगुञ्जज्जालकजालेन, दंशनकुपितकपिकपोतनखकोटिपाटितपाटलकीटपुटसङ्कुलेन, कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटपाटित-मत्तमातङ्गकुम्भस्थल-रुधिरच्छटाच्छुरितचारुकेसरभारभासुरकेसरिकदम्बेन, महासागरकच्छोपान्तेन कतिपयदूरं गत्वाऽतिचपलवीचिप्रचयतया ताण्डवोद्दण्डदोर्दण्डखण्डपरशुविडम्बनापण्डितं, वारुणीविजयपताकाभिरिव, शेषकुलनिर्मोकमञ्जुमञ्जरीभिरिव, शशाङ्कपरिशेषपरमाणुसन्ततिभि-

इत्यमरः ) रङ्कुर्मृगः, ("रङ्कुशम्बररौहिषाः" इत्यमरः )। रोमन्थायमानाः चर्वितस्याकृष्य पुनश्चर्वणं रोमन्थः, ["वमथो रोमन्थतपोभ्यां वर्त्तिचरोः" इति क्यङ्। ङित्त्वादात्मनेपदम् ] चमरी मृगभेदः। अवगाहारि सलीलं गिरिनितम्बानां निर्झरनिनादेन निद्राणं करिकुलं तस्य मन्दायमानः कर्णतालो दुन्दुभिरेव तेन। रुरुर्मृगभेदः। अता हरिता श्यामा, न तु शुष्का, या हरिद्रा तद्द्रवैः रज्यमाना वराहपोतानां पोत्रपालिर्मुखाग्रपालिरेव तेन, ("पोत्रं वक्त्रं मुखाग्रञ्च शूकरस्य हलस्य च" इति विश्वप्रकाशः। "पालिः पङ्क्तिप्रदेशयोः" इति विश्वः )। गुञ्जानां काकचिञ्चीनां, पुञ्जे गुञ्जज्जालकजालं यत्र तेन, ("गुञ्जाऽपि पटहे प्रोक्ता काकचिञ्चां कलध्वनौ" इति विश्वप्रकाशः। "जालकः कथितो घोङ्घः कारुडी चापि जालकः" इत्युत्पलिनी। "घोङ्घे कारुडिकायां च जालकः परिकीर्त्तितः" इति हारावली )। दंशनेत्यादि।—पाटलकीटः श्वेतरक्तः कीटविशेषः। कुलिशशिखरं वज्राग्रम्; केसरभारः स्कन्धकेशसमूहः; भासुरं दीप्तिमत्, ["भञ्जभास—" इति घुरजन्त ]; कदम्बकं समूहः। अतिचपलवीचिप्रचयतया अतिचञ्चलतरङ्गसमूहतया, ताण्डवे उद्दण्डौ दोर्दण्डौ भुजदण्डौ यस्य तादृशः, खण्डपरशुः शिवः, तद्विडम्बनापण्डितं तदनुकरणपण्डितं, ("भूतेशः खण्डपरशुः" इत्यमरः )। वारुणी वरुणस्येयं, विजयपताकाभिरिव, जलाधीशत्वादिति भावः। शेष इत्यादि।—

रिव, लक्ष्मीलीलाऽऽतपत्रधाराभिरिव, जलदेवताचन्दनविच्छित्ति-भिरिव, फेनराजिभिरुपात्तरामणीयकम्, अपरमिव गगनमवनि-मवतीर्णम्, अर्णवच्छलादुच्छलच्छीकरकणनिकरैर्नभश्चरान् मुक्ताफलैरिव विलोभयन्तम्, अभयाभ्यर्थनागतानेकसपक्षक्षिति-धरभरितकुक्षिभागं, सगरसुतशताखातम्, उत्खातपारिजात-कम्, अभिजातमणिरत्नाकरं, करिमकरकुलसङ्कुलं, शकुलकुल-कवलनाभिलाषसञ्चरन्नक्रचक्रम्, अस्तिमिततिमिङ्गिलकुलं, कूल-कन्दली-वलयाचल-विलुलितशैला-तरलितलवली-लवङ्गमातुलुङ्ग-गुल्मम्, ऊर्मिमारुत-प्रसारिततरलतीत्ताल-तालहिन्ताल-तालीतरलित-जलमानुषमिथुनमृदित-सलिलपुलिन-बालशैवालं, प्रवालाङ्कुरकोटिपाटित-मुखखिन्नशङ्खनखशिखालिखित-तटलेखं, खगेश्वरगात्रपत्ररथपटलकलिलसलिलम्, अद्याप्यनिमग्नमन्दर-मथनसंस्कारमिवावर्त्तभ्रान्तिभिः, सापस्मारमिव फेनैः, ससुरा-मोदमिव वेलावकुलगन्धैः, सरोषमिव गर्जितैः, सखेदमिव निश्वसितैः, सभ्रुकुटीभङ्गमिव तरङ्गैः, सालानस्तम्भमिव राम-

निर्मोकः ("समौ कञ्चुकनिर्मोकौ" इत्यमरः)। सन्ततिः समूहः। लक्ष्म्या लीलार्थं क्रीडार्थं, यदातपत्रम् "चालिपत" इति भाषायां, तद्धाराभिरिव। विच्छित्ति-श्चमत्कारः। रामणीयकं रमणीयता। अपरमित्यादि। सगरो राजा, खातं [खनु अवदारणे क्तः, "जनसन—"इत्यात्वम्]। पारिजातो देववृक्षः। अभिजातानां शुद्धानां, मणीनां रत्नानां चाकरः। करी जलचरो गजः, मकरश्च, तयोः कुलेन, करिरूपमकरकुलेन वा, सङ्कुलम्। शकुलो मत्स्यभेदः. नक्रः कुम्भीरः। अस्तिमितं चञ्चलं, तिमिं मत्स्यं, गिलतीति तिमिङ्गिलः महामत्स्यः, ["मूलविभुजादित्वात्" कः, "अचि विभाषा" इति लत्वं, "गिलेऽगिलस्य" इति मुम्] तस्य कुलं यत्र तम्। कूलमित्यादि।—लवली लताभेद इति केचित्, फलमित्यपरे, "हरफारे-वड़ी" इति प्रसिद्धं, मातुलुङ्गको रुचकः, ("रुचको मातुलुङ्गकः" इत्यमरः)। प्रवालो विद्रुमः, पाटितं विदारितं, शङ्खनखाः क्षुद्रशङ्खाः, ("क्षुद्रशङ्खाः शङ्खनखाः" इत्यमरः)। खगेश्वरो गरुड़ः। अपस्मारो रोगः। सुरा मद्यम्। ("वारुणी

सेतुना, कुम्भीनसीकुक्षिमिव लवणोत्पत्तिस्थानं, व्याकरणमिव विततस्त्रीनदीकल्पबहुलं, राजकुलमिव दृश्यमानमहापात्रं, हस्तिबन्धमिव वारिगतानेकनागमुच्यमानफूत्कारं, विश्वामित्रपुत्रवर्गमिवाम्भोजचामरमत्स्योपशोभितं, सत्पुरुषमिव गोत्राश्रयं, साधुमिवाच्युतस्थितिरमणीयं, सुनृपमिव सज्जनकमकरं, क्षतमन्युमिव करतोयाप्लुतमुखं, विरहिणमिव चन्दनोदकसिक्तं, विलासिनमिव नर्मदानुगतम्, उद्धृतकालकूटमपि प्रकटितविषराशिम्, अतिवृद्धमपि सुन्दरीपरिवृतकण्ठं, सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं जलनिधिमपश्यत्।

---

बन्धस्तथा:" इत्यमरः)। कुम्भीनसी राक्षसी, लवणस्तत्सुतः। व्याकरणमिव विततानि स्त्री स्वाधिकारकार्याणि, नदीसंज्ञा तत्कार्याणि, कल्पसंज्ञाकार्याणि, बहुलं भवति बहुलमित्यादि; पक्षे—विततानां स्त्रीनदीनां पत्नीभूतानां नदीनां, कल्पैस्तरङ्गाधरपानरूपैः, बहुलम्। राजकुलमिव महापात्रं महामात्यः; पक्षे—पात्रं तीरद्वयान्तरम्। [ बन्ध बन्धने, अधिकरणे घञ् ] हस्तिनो बध्यन्तेऽत्र हस्तिबन्धः गजबन्धनस्थानमिव, वारिगतैर्बन्धनरज्जुगतैः, तद्बद्धैः, अनेकनागैर्गजैः, मुच्यमानफूत्कारं, ( पानीये वारि विख्यातं वारि बन्धनरज्जुषु" इति धरणिः ) [ "वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्" इतीञ् ] पक्षे—वारि जलं, नागाः सर्पाः, ( अमरस्तु—"वारी तु गजबन्धनी" इति दीर्घान्तं बन्धनस्थानवाच्यमाह, तन्मते तु नैतदुपपद्यते, कोषान्तरेष्वेवमेव। विश्वामित्रपुत्रवर्गमिव अम्भोजैः कमलैः, चामरैर्बालव्यजनैः, मत्स्यैः उपशोभितम्; पक्षे—अम्भोजचामरं शैवालं, ( "शैवालं शैवालाम्भोज चामरं जलनीलिका" इत्युत्पलिनी )। सत्पुरुषमिव गोत्रं वंशः; पक्षे—पर्वतः। साधुमिवाच्युता अभ्रष्टा, स्थितिर्मर्यादा, तया रमणीयम्; पक्षे—अच्युतस्य विष्णोः, स्थित्या रमणीयम्। सुनृपमिव सज्जनानां कमकरं व्यवहारकरम्; पक्षे—सज्जा नक्रा मकरा यत्र तम्। क्षतमन्युमिव क्षतक्रोधमिव, करतोयेन पाणिस्थजलेन, आप्लुतं क्षालितं, मुखम्; पक्षे—करतोया नदी, ( "करतोया सदानीरा" इत्यमरः )। विरहिणमिव चन्दनस्योदकेन सिक्तम्; पक्षे—चन्दना नदीविशेषः, चन्दनसम्बन्धि जलं वा। विलासिनमिव नर्म क्रीडा, तां ददाति ताभिरनुगतम्; पक्षे—नर्मदा नदी, ( "नर्मदा सोमोद्भवा" इत्यमरः )। उद्धृतः कालकूटो

अचिन्तयच्च—"अहो! मे कृतापकारेणापि विधिनोपकृतिरेव कृता यदयं लोचनगोचरतां नीतः समुद्रः; तदत्र देहमुत्सृज्य प्रियाविरहाग्निं निर्वापयामि। यद्यप्यनातुरस्य देहत्यागो न विहितः, तथाऽपि कार्य्यः, न खलु सर्वः कार्य्यमकार्य्यं वा करोति इति। अस्मिन् संसारे केन किं वा न कृतम्? तथा हि, गुरुदारग्रहणं द्विजराजोऽकरोत्। पुरूरवा ब्राह्मणधनतृष्णया विननाश। नहुषः परकलत्रदोहदी महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः

हालाहलो यस्मात् तमपि, प्रकटितो विषस्य क्ष्वेडस्य, राशिर्येन तमिति विरोधः; विषं जलमिति परिहारः। अतितरुणमतिस्थविरमपि, सुन्दरीभिः स्त्रीभिः, परिहृतकण्ठमिति विरोधः; अतितरुं महीयांसं, सुन्दरी वृक्षभेदः, कण्ठं समीपदेशः इति परिहारः, ("कण्ठो गले गलस्थाने समीपेऽपि प्रकीर्त्तितः" इति विश्वः)। सुराश्चन्द्रादयो मद्यं वा, तदुत्पत्तिस्थानमपि ताभ्यामनधिष्ठितमिति विरोधः; यद्वा—सुरस्य ब्रह्मणः, उत्पत्तिर्यस्मात् सुरोत्पत्तिर्विष्णुः, तस्य स्थानमपि, असुरैरधिष्ठितमिति परिहारः।

अचिन्तयदित्यादि।—यत् यतः, यत्सन्निधे राघवेणारण्यवियुक्ता कान्ता विन्ना, सोऽयं लोचनगोचरतां नीतः। तदत्र देहमुत्सृज्य शरीरत्यागं कृत्वा, तत्कृतकर्माचरणासामर्थ्यादिति भावः, प्रियाविरहाग्निं निर्वापयामि तेनाथ कान्ताविरहाग्नर्यांग्नौ निर्वापितः, अहं तु शरीरमुक्तेरित्यर्थः। "एति जीवन्तमानन्दो नरं वर्षशतादपि" इति प्राचीनगाथया आत्मघातनिषेधमाह, यद्यपीत्यादि।—आतुरस्य तु मरणं "दुश्चिकित्स्यैर्महारोगैः पीडितस्तु महानपि। प्रविशेज्ज्वलनं दीप्तं कुर्य्यादनशनादिकम्॥" इत्यादि स्मृत्युक्तमेव। "अवश्यभाविनो भावा भवन्ति महतामपि। नग्नत्वं नीलकण्ठस्य महाऽहिशयनं हरेः॥" "अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः" इत्यादिना भवितव्यताप्राबल्यं मन्वान आह, तथाऽपीति।—उभयमपि करोतीति भावः। अस्मिन्निति।—किमकार्य्यं न कृतमित्यर्थः। द्विजराजश्चन्द्रः, गुरुदारग्रहणं बृहस्पतिभार्य्यायास्तारायाः ग्रहणं, तया सह सुरतं, तत्र बुध उत्पन्न इत्यादिपर्वणि कथा; पक्षे—द्विजराजो ब्राह्मणश्रेष्ठः, श्रुतिस्मृत्याद्यध्ययनसम्पन्नः, गुरुदारग्रहणं गुर्वङ्गनागमनम्। पुरूरवा राजा, ययःशीर्षे ब्रह्मस्वमगृह्णात्, तत एव नष्ट इत्यपि भारते। नहुषो राजा, परकलत्रदोहदीन्द्राण्यां साभिलाषी, महाभुजङ्गः सर्पः, आसीत्, ("कामुको दोहदी मतः" इति रत्नकोषः) इत्यर्थः

दशरथ इष्टरामोन्मादेन मृत्युमवाप। कार्त्तवीर्य्यो गोब्राह्मण-पीड़या पञ्चत्वमयासीत्। युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज। शान्तनुरतिव्यसनाद्विपिने विललाप; इत्थं नास्त्यकलङ्कः कोऽपि, तदहमपि देहं त्यजामि"।

इति विचिन्त्य कुररखरनखरशिखरखण्डितपृथुरोमबिलम्, अविरलशकुलकुलशल्कजलनकुलोच्चारं, क्रोष्टुकुलोत्सृष्टविकट-कर्कटकर्परपरम्परापरिगतोपान्तम्, अतितरलतरजलरयलुलित-चटुलशफरकुलकवलनकृतमतिनिभृतबकशकुनि-निवहधवलित-परिसरम्, अतिचपलजलकपिकुलविहरणलुलितसलिलकण-निकरजनित-पवनरयपरिमिलितशिशिरतरम्, अनुदिवस-निपतदतितरुणवनमहिषगवलशिखरलिखितविषमतटम्, अन-

---

दशरथ इति।—मृगयायां हतस्य तपस्विनः पित्रोः "यथा पुत्रवियोगादावयोर्मृतिरेवं पुत्रशोकान्मृतिस्तेऽस्तु" इति शापाद्रामवियोगेन मृतिः; मृगयाव्यसनेन तपस्वि-वधोऽपि ध्वनितः। कार्त्तवीर्य्यः सहस्रबाहुः, गोऽर्थं जमदग्नेः, ब्राह्मणस्य जमदग्नेः, पीड़या मृतः, अनेनैवापराधेन रामेण निहतोऽर्जुनः। युधिष्ठिर इति। शान्तनुरिति। शोकान्मृतिहेतोत्सर्गो वने च परिदेवनम्। कन्दर्पकेतुः सकलताकुपष्टम्भकमुक्तवान्। तदहमपि देहं त्यजामि।

इति विचिन्त्य पुलिनमाससादेत्यन्वयः। कुररा उत्क्रोशाः, तेषां खरनखर-शिखरैः खण्डितपृथुरोमबिलं झषबिलम्। ("उत्क्रोशकुररौ समौ"। "पृथुरोमा झषो मत्स्यः" इत्यमरः)। अविरलानि शकुलकुलस्य मत्स्यविशेषकुलस्य, शल्कानि यत्र तादृशाः, जलनकुलानामुच्चारो यत्र तत् ("शल्के शकलवल्कले" इति "उच्चारावस्करौ शमलं शकृत्" इति चामरः)। क्रोष्टुकुलोत्सृष्टाः शृगालकुलत्यक्ताः, विकटा कर्कटानां कर्परपरम्पराः कपालपरम्पराः, ताभिः परिगतोपान्तं व्याप्त-प्रान्तम्। ("स्यात् कर्परः कपालोऽस्त्री" इत्यमरः)। अतितरलजलस्य रये वेगे, लुलितं चटुलं यत् शफरकुलं तत्कवलने कृतमतिरत एव निभृतो मन्दः, चेष्टाशून्यः, बकशकुनिनिवहस्तेन धवलितपरिसरम्। अतिचपलेति।—("शिशुमारो जलकपि-रन्द्रको चापिपुच्छकः" इति हारावली)। अनुदिवसं निपतन्तोऽतितरुणा वन-महिषास्तेषां गवलशिखरैः शृङ्गाग्रैः, लिखितानि विदारितानि, [illegible]।

रत-चरदसितमुखचरण-विहग-निवह-मधुर-निनद-मुखरितम्, अहिमकरचरण-रुचिर-जलमनुज-शयन-मुदित-जलधरखचितलम्, अतिबहल-मदजलशबल-करटतट-करिवरशत-निपतितमधुकर-विरुतिरतिकरम्, अतिजवन-पवनविधुतजलधिजल-पटल-विकटनिपतितमणिगणपरिगतपरिसरं, जलनिधिभुजगनिर्मुक्त-निर्मोकपट्टमिव, दर्पणमिव वसुन्धरायाः, स्फटिककुट्टिममिव वरुणस्य, विपुलं पुलिनजलमाससाद। ततः कृतस्नानादि-र्जलमवतरितुमारेभे शरीरत्यागाय।

अथ सानुग्रहेषु ग्राहेषु, निर्मत्सरेषु मत्स्येषु, अक्षुद्रेषु क्षुद्रेषु, वत्सलेषु कच्छपेषु, अक्रूरेषु नक्रेषु, अभयङ्करेषु मकरेषु, अमारेषु शिशुमारेष्वाकाशसरस्वती समुदचरत्—"आर्य्य कन्दर्प-केतो! पुनरपि तव प्रियया सह सङ्गमो भविष्यत्यचिरेण, तत् विरम मरणव्यवसायात्" इति। तदुपश्रुत्य मरणाद्विरराम। पुनः प्रियया समागमेच्छया शरीरस्थितिहेतुमाहारं चिकीर्षुः

("गवलं माहिषं शृङ्गम" इत्यमरः) अत्र गवलप्रयोगे यत्नाव्यं तदन्यवोक्तम्। अनवरतं चरन्तोऽसितमुखचरणा धार्त्तराष्ट्राः, तेषां निवहस्तस्य मधुरनिनादैर्मुखरि-तम्। ("राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाख्यास्ते धार्त्त-राष्ट्राः सितेतरैः॥" इत्यमरः)। अहिमकरः सूर्य्यः, तस्य चरणैरिव किरणैरिव, रुचिरं भासुरं, जलमनुजानां जलमनुष्याणां, शयनेन मुदितं जलगतं जलान्तर्गतं, धरखचितलं यत्र; यद्वा—अहिः सर्पः, मकरो जलजन्तुभेदः, तयोश्चरणेन भ्रमणेन, रुचिरं पाताधानादिरहितं, जलमनुजशयनेन मुदितं जलधरखचितलं यत्र। अतिबहलमदजलशबलः करटो गण्डो येषां तादृशकरिवरशतेषु निपतितमधुकराणां विरुतिभिः शब्दैः, रतिकरम्। ("करिकुम्भगण्डौ करटो" इत्यमरः) कट इत्यपि पाठोऽर्थस्त्वभिन्नः। अतिजवनोऽतिवेगवान्, पवनस्तेन विधुतजलधिजलपटलान्निपतितो मणिगणो यत्र तादृशः, परिसरो यस्य तम्। ("जवनस्तु जवाधिके" इत्यमरः)। जलनिधीत्यादि। तत इत्यादि।

आकाशसरस्वती आकाशवाक्, समुदचरदुत्थिता, [ चरकर्मकत्वात् "उदश्चरः" इत्यात्मनेपदं न ]। तदुपश्रुत्य, आर्य्येत्यादि।

महासागरकल्लोलान्तभुवं जगाम । अथ तत्र इतः परिभ्रमन् फलमूलादिना वने वर्त्तमानः कियन्तं कालं निनाय कन्दर्पकेतुः ।

एकदा कतिपयमासापगमे काकलीगायन इव सन्नद्धनिम्नगामदः, सन्ध्यासमय इव नर्त्तितनीलकण्ठः, कुमारमयूर इव समूढशरजन्मा, महातपस्वीव प्रशमितरजःप्रसरः, तापस इव धृतजलदकरकः, प्रलयकाल इव दर्शितानेकतरणिविभ्रमः, निरुपद्रुतकाननोद्देश इव घनोत्सुकितसारङ्गः, रेवतीकरपल्लव इव हलिधृतिकरः आजगाम वर्षासमयः । निर्भिन्नमेघनीलोत्पलकानने क्रीडामरालीव, नभसि स्मरस्य रत्नलीकेव, जलदलक्ष्मीमातङ्गकन्यानर्त्तनरज्जुरिव, नभःसौधतोरणमालिकेव,

एकदा वर्षासमय आजगामेति सम्बन्धः । काकलीगायनः कलसूक्ष्मगायनसदृशः, सन्नद्धं निम्नं नीचं, गभीरं वा, गानं ददाति तादृशः ; पक्षे—सन्नद्धाः परिपूर्णप्रायाः, निम्नगा नद्यः, मदाश्च यत्र । ("काकली तु कले सूक्ष्मे" । "निम्नं गभीरं गम्भीरम्" इति चयोरप्यमरः ) । नीलकण्ठः शिवः ; पक्षे—मयूरः । कुमारमयूर इव सम्यगूढः शरजन्मा षडाननो येन ; पक्षे—समूढानां पुञ्जीभूतानां, शराणां जन्म यत्र । ("समूढः पुञ्जिते भुग्ने सद्योजाते धृतेऽपि च" इति विश्वः ) । रजो धूलिः ; पक्षे—द्वितीयो गुणः । तापस इव तपस्वीव, धृतो जलदो जलप्रदः, करकः कमण्डलुर्येन ; पक्षे—धृता जलदाः करका वर्षोपला येन । ("करका मेघपाषाणे करका च कमण्डलौ । दाडिमेऽपि च करकं करी च करकः स्मृतः ॥" इति विश्वः ) वर्षासु करकावर्षणं कविसम्प्रदायः । प्रलयकाल इव दर्शितोऽनेकतरणीनां सूर्याणां, विभ्रमो येन ; पक्षे—तरणिर्नौः । ("स्त्रियां नौस्तरणिस्तरिः" इत्यमरः ) विभ्रमो भ्रमणम् । निरुपद्रुतकाननोद्देश इव घनमत्यन्तं, घना नीरुत्सुकिताः सारङ्गा हरिणा यत्र ; पक्षे—घनेन मेघेन, उत्सुकिताः सारङ्गाश्चातका यत्र । ("चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" इत्यमरः ) । रेवतीकरपल्लव इव हलिनो बलरामस्य, धृतिकरो धैर्याधायकः ; पक्षे—हलिनां कर्षकाणां, धृतिकरः प्रीतिकरः । इन्द्रधनुर्लता रराजेति सम्बन्धः । निर्भिन्ने विकसिते, मेघे एव नीलोत्पलकानने क्रीडामरालीव । नभसि कुसुमशरस्य रत्नलीकेव रत्नखचितलीकेव । जलदलक्ष्मीव

प्रवसता निदाघेन दिवः पयोधरे दत्ता स्मरणाय नखक्षतावलीव, गगनलक्ष्मीरत्नरशनामालेव, नभोमन्दारतरुसुन्दरकलिकामालेव, रतिनखमार्जनरत्नशलाकेव, रत्नशुक्तिरिव कुसुमकेतोरिन्द्रधनुर्लता रराज। अतिवेगनिपीतजलधिजलशङ्खमालामिव बलाकाच्छलादुद्वमन्नदृश्यत जलदः। पीतहरितकृष्णासु केदारिकाकोष्ठिकासु समुत्पतद्भिर्जतुशबलैरिव दर्दुर्नयद्यूतैरिव चिक्रीड वर्षाकालः। रविदीपकज्जलनिचयनिभे निकषोपले इव, मेघसमयसुवर्णकारनिकषितसुवर्णलेखेव तडिदशोभत। विरहिणां हृदयं विदारयितुं करपत्रमिव कुसुमा-

मातङ्गश्च चण्डालभेदश्च, कन्या सैव नर्तकी तस्याः रज्जुः समाकर्षणरज्जुः, चण्डालकन्या रज्जुमवलम्ब्य नृत्यति। ("चण्डालप्लवमातङ्ग दिवाकीर्तिजनङ्गमाः" इत्यमरः)। नभ इति। प्रवसता निदाघेनोष्णोपगमेन, स्मरणाय दिवो द्योः, पयोधरे स्तने मेघे च, दत्तानि नखक्षतानीव। "चिरोत्पन्नप्रवासेन प्रीतिर्गच्छेत् पराभवम्। रागायतनसंस्कारि यदि न स्यान्नखक्षतम्॥" इति कामतन्त्रम्। ("निदाघ उष्णोपगमः"। "द्योदिवौ द्वे स्त्रियामभ्रम्" इति द्वयोरप्यमरः)। गगनलक्ष्म्याः रत्नरशनेव काञ्चीव। ("स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा" इत्यमरः)। नभोमन्दारस्य देवतरुविशेषस्य, सुन्दरकलिकामालेव। रतिरित्यादि। अतिवेग इति शङ्खपाने हेतुः; बलाकाच्छलाद्विसकण्ठिकामिषात्, उद्वमन्नुद्गिरन्नदृश्यत। ("बलाका विसकण्ठिका" इत्यमरः) बकजातिविशेषः। कैतवापह्नुतिरलङ्कारः,—"कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः" इति लक्षणात्। कृष्णास्वसितासु, सदूर्वास्वित्यर्थः, जातिद्वयसद्भावाद्विशेषणसार्थक्यम्; क्वचित् कृष्टास्विति पाठः, तत्र हलसंस्कृतास्वित्यर्थः, केदारिका एव कोष्ठिकास्तासु, ["केदारकोष्ठाभ्यामल्पत्वे" कनि रूपम्] "क्यारी" इति भाषायां, वस्त्रादिनिर्मितं क्रीडासाधनं वस्तुविशेषः, "कोठा" इति च, पीतहरितैस्सवर्णैः, जतुशबलैर्लाक्षारक्तैः, नयो युक्तनीतिः, तच्छब्दबोध्यैर्द्यूतैश्चतुरङ्गैः, चतुरङ्गसाधनेषु लक्षणा नयद्यूतसाधनभूतैर्हस्त्यश्वादिभिरिव समुत्पतद्भिः, दर्दुरैर्भेकैः, वर्षाकालश्चिक्रीड। [जातुषैरिति पाठे "विकारे त्रपुजतुनोः षुक्" इत्यण् षुगागमश्च]। रविरिति।—निकषोपलमालाश्च, ("काषो निकषोपलम्") "कसौटी" इति भाषायाम्। विरहिणामिति।—करपत्रं क्रकचं, ("क्रकचोऽस्त्री

शुभस्य क्रकचच्छदमशोभत । जलददारुणि लोलतडिल्लताकरपत्रदारिते पवनवेगनिर्धूताश्चूर्णचया इव जलरेणवो बभुः । विच्छिन्नदिग्वधूहारमुक्ता इव, खरपवनवेगभ्रामितघनमेघघरट्टघट्टनसञ्चूर्णिततारानिकरा इव, त्रिभुवनविजिगीषोर्मकरध्वजस्य प्रस्थानलाजाञ्जलय इव करका व्यराजन्त ।

अनन्तरमखञ्जखञ्जरीटे, अकुञ्चितक्रौञ्चसञ्चारे, निर्भरभारद्वाजद्विजवाचाटविटपे, पटुप्रभप्रभाते, भ्रान्तशुककुलकलमकेदारे, प्रवेशिकावेशिकराजहंसे, कंसारातिदेहद्युतिद्युतले, हंसतूलतुलितजरज्जलमुचि, सान्द्रीकृतेन्द्रमहकामुकमुदि, मधुरमधुस्रवावीरुधि, सुरससारसरसितसारकासारे, शोभनकसेरु-

---

च्छदपत्रम्" इत्यमरः ) "आरा" इति भाषायां, क्रकचपत्रं केतकपुष्पम् । ( "द्रोणीदलं सूचिपुष्पं अस्यालं क्रकचच्छदम्" इति हारावली )। लोलतडिल्लताकरपत्रदारिते जलददारुणि मेघकाष्ठे, पवनवेगनिर्धूताः कम्पिताः, चूर्णचया इव जलरेणवः शीकराः, बभुः शुशुभिरे। विच्छिन्नेति।—घनो मेघ एव, घरट्टः "जाँता" इति भाषायां, पुरुषप्रयत्ननिरपेक्षो जलादियन्त्रभ्रमणाधः। करका वर्षोपलाः।

अनन्तरं शरत्समयारम्भे कन्दर्पकेतुः शिलामयीं पुत्रिकां पाञ्चालिकां, मम प्रियानुकारिणीयमिति तां करेण पस्पर्शेति सम्बन्धः। शरदं वर्णयन्नाह।—खञ्जनाः खञ्जनाः, [ खजि गतिवैकल्ये ]। अकुञ्चिते विस्तृते। निर्भरं भारद्वाजद्विजैर्वाचाटविटपे, भारद्वाजवाचाटत्वं विटपेष्वारोप्यते, तेन समासानामालङ्कारोऽयं "साधारणाभिसम्बन्धात् सम्बन्धिषु परिग्रहः। यत्र सा लक्षणा नाम" इति कण्ठाभरणे। पटुप्रभं सुन्दरं, प्रभातं यत्र। भ्रान्तं भ्रमणविशिष्टं, शुककुलं तादृशं कलमानां शालीनां, केदारं यत्र यत्र। प्रवेशिका आवेशिका आगन्तवः, राजहंसा यत्र, ( "स्युरावेशिक आगन्तुः" इत्यमरः )। कंसारातिदेहद्युतिः कृष्णशरीरतुल्यकान्तिः, द्युतलं। हंसवत् तूलं हंसतूलं, तत्तुलिते जरज्जलमुचि पुराणमेघे, जलसंयोगकृतं गुरुत्वं जलाभावयोगकृतं जरत्त्वं बोध्यम्। सान्द्रीकृता घनीकृता, इन्द्रमहकामुकानां शुनां, मुत् प्रीतिर्येन तत्र। ( "इन्द्रवृक्ष शुनकौ ग्रामशूकरभेदकौ। चाग्रमधस्य कपिलः स्यादिन्द्रमहकामुकः।" इत्युत्-

इत्थं कन्दर्पकेतुः परिभ्रमन् शिलामयीं पुत्रिकां दृष्ट्वा कौतुकेन मोहेन शोकावेगेन मम प्रियाऽनुकारिणीति करेण पस्पर्श।

अथ सा स्पृष्टमात्रा शिलास्वभावमुत्सृज्य पुनर्वासवदत्ता-स्वरूपमापेदे। तामालोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सुचिर-मालिङ्ग्य पप्रच्छ—"प्रिये वासवदत्ते! कथय किमिदं वृत्तान्तम्?"। उदिता सती सा दीर्घमुष्णं च निःश्वस्य कथयितुमारेभे।

"आर्य्यपुत्र! अपुण्याया मम मन्दभाग्यायाः कृते महा-भाग! उज्झितराज्य एकाकी प्राकृतजन इव वाङ्मनसयोर-गोचरं दुःखमनुबभूव। अथोपवासादिना कृशतरो मूल-फलादिनाऽऽर्य्यपुत्र आहारं करोतीति विचिन्त्य फलान्वेषणायोप-वनतरुनवलोकयन्ती कतिपयतरुगोचरमगच्छं, क्षणेन च तरुगुल्मान्तरितं क्रियमाणकायमानिकनिकेतनं, विरच्यमानेश्वर-गृहम्, अवतार्यमाणकण्ठारकम्, आरभ्यमाणपटकुटीकं, व्यवस्थाप्यमानवेश्यानिवेशं, श्रूयमाणतुरगह्रेषाशतं, वाद्य-

---

मध्येत्यादि।

एकाकी असहायः। ["एकादाकिनिच्चासहाये"] ("एकाकी त्वेक एककः" इत्यमरः)। प्राकृतजन इव नीचजन इव। ("प्राकृतश्च पृथग्जनः" इत्यमरः)। वाङ्मनसयोरिति ["अचतुर—" इत्यच्प्रत्ययान्तो निपातः। मध्येत्यादि।—अगच्छं याता। क्षणेन सेनासन्निवेशं सेनाशिबिरं, दृष्टेति चिन्तयन्तीं मां प्रति सेनापतिर्धावित इति सम्बन्धः। तरुगुल्मान्तरितं क्रियमाणं रच्यमानं, कायमानिकैः "कामार" इति प्रसिद्धैर्निर्माणपुरुषैः, निकेतनं पटमण्डपं यत्र तत्। ("निवेशः शिबिरोद्वाह-विन्यासेषु प्रकाशितः" इति विश्वप्रकाशः)। विरच्यमानं विशिष्य रच्यमानम्, ईश्वरस्य सेनापतेः, गृहं यत्र तत्। अवतार्यमाणमश्वादेर्भूमावुत्तार्यमाणं, कण्ठारकं "कण्ठाली" इति दाक्षिणात्यभाषायां प्रसिद्धं वस्त्रपात्रादिस्थापनार्थं वस्त्रादिनिर्मितं पात्रम्। व्यवस्थाप्यमानाः यथास्थाने स्थाप्यमानाः, वेश्यानां निवेशो यत्र। श्रूयमाणं ह्रेषाशतं यत्र तत्। ("ह्रेषा ह्रेषा च निःस्वनः" इत्यश्वप्रकरणेऽमरः)। अवरुध्य-

मानविस्मयढक्काशतपुष्करम्, अन्विष्यमाणस्वादुसलिलाशयम्, उद्दिश्यमानविपणिकेतुवंशं सेनासन्निवेशमपश्यम्। किमयं ममान्वेषणाय तातस्य व्यूहः समायातः? आहोस्विदार्य्यपुत्रस्य? इति विचारयन्तौ मां प्रति चारकथितवार्त्तः सेनापतिर्धावितः। ततः किरातसेनापतिस्तादृश एव सेनान्वितो मृगयागतः सोऽपि धावितः। अनन्तरं चिन्तितं मया, यद्यहमार्य्यपुत्राय कथयामि तदा स एकाकी एभिरेव हन्तव्यः, अथ न कथयामि तदैभिरहं घातनीयेति चिन्ताक्षण एव द्वयोः सेनयोर्युद्धमभवदेकामिषलुब्धयोर्गृध्रयोरिव।

ततः प्रवृत्तप्रतिशरासनशरासारदुर्दिनच्छन्नदिनकरकिरणे,

समाधिः पूर्वमुदिता। वाद्यमानं विस्मयसूचकं ढक्काशतं पुष्करं वाद्यविशेषो यत्र तम्, [शार्ङ्गविशिष्टो विस्मयशब्दस्त्वपाङ एवेति स्पष्टं भाष्यप्रदीपे] ("स्याद्यशः-पटहो ढक्का" इत्यमरः। "पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः। औषध-द्वीपविहग तीर्थराजोरगान्तरे॥ पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च॥" इति विश्वप्रकाशः)। उद्दिश्यमान उत्पाद्यमानः, विपण्यां पण्यवीथिकायां, केतुर्यत्र; [दिश अतिसर्जने] यद्वा—उद्दिश्यमानः केतोरस्मिन् भागेऽस्मदीय आवास इति ज्ञानार्थमुद्देशविषयीक्रियमाणः, केतुर्यत्र। आहोस्वित् संशयेऽव्यय-समुदायः। चारेण गूढपुरुषेण, कथिता वार्त्ता वृत्तान्तो यस्मै तादृशश्चारकथित-वृत्तान्तः, ("चारश्च गूढपुरुषः" इत्यमरः)। किरातसेनापतिः। ("भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः)। मृगयाया आखेटार्थम्, आगतः। ("आखेटो मृगया स्त्रियाम्" इत्यमरः)। अनन्तरं द्वयोरेकदेशागमनोत्तरम्। एका-मिषलुब्धयोः। ("आमिषं पलले लोभे सम्भोगोत्कोचयोरपि। आमिषं सुन्दराकार-भूपादिविषयेऽपि च॥" इति विश्वप्रकाशः)।

तत एवं रणस्थले सति रणभूमौ, योध्यमर्दनस्थाने इति यावत्। योधाः सममेकैका-ग्रच्छेदेन, द्विषां शत्रूणां च जीवस्य जीवाशाः प्रत्याशाश्च, आकृष्टिमाकर्षणं, चक्रुरिति सम्बन्धः। समानातिशययोर्निरवकाशः, पूर्वनिपातप्रकरणमनित्यत्वे व्यत्यन्तातिशययोर्मिताः, "अत्यन्तातिशययोस्तु पौर्वापर्य्यव्यतिक्रमः" इति वचनात्। प्रवृत्तः यः प्रतिशरासनात् प्रतिधनुषः, शरासारो बाणधारासम्पातः, तेन दुर्दिनं मेघच्छन्नदिनं, तेन छन्नदिनकर-

रणकर्मविशारद-द्विरददन्तद्वयोत्क्षिप्त-सुभटक्षणश्लिष्यमाणविद्याधरविभ्रमे, समरदर्शनमत्सरदनेकनभश्चरचारणचक्रवाले, वेतालसमाक्रान्तस्कन्धकबन्धचक्रक्रियमाणचारुप्रचारे, चारुभटखड्गखण्डित-द्विरदपाद-समाप्त-पिशाचीकर्णोलूखलाभरणकौतुके, समुत्पतदतिनिनदनान्दीके, क्रान्दिशीकभीरुणि, रणखले शृगालप्रार्थनीयेष्वामिषापणेष्विव जिह्मगदष्टेष्विव शरीरेष्वनास्थां कलयन्तः समं द्विषां धनुषां च जीवाकृष्टिं योधाश्चक्रुः। त्यागिन इव दानवन्तः, मार्गणसम्पातमसहन्तः, समृद्धविलासिन इव शृङ्गारशोभिताः सहेमकक्षाश्च, सदारामा इव कदलीराजिताः सद्विजाश्च, निशा इव नक्षत्रमालोपशोभिताः, दिवसा इवोल्लसत्पुष्करा महामृगा बभुः। उत्क्षिप्ता इव क्षमां मुञ्चन्तः, पयोधय इवावर्त्तशोभिताः सोर्मयश्च, उद्यानदेशा इव समल्लिकाक्षाः, कुलगृहा इवाभिनवभाण्डहारिणः, रत्नाकरा

---

क्षिरणे सति, गौणे आसारदुर्दिने; ("धारासम्पात आसारः।" "मेघच्छन्नेऽह्नि दुर्दिनम्" इति द्वयोरप्यमरः)। रणकर्मणि विशारदश्चतुरः, द्विरदो हस्ती, तेन दन्तद्वयोत्क्षिप्तः सुभटः शूरः, तेन क्षणं श्लिष्यमाण आश्लीयमाणः, विद्याधरविभ्रमो देवयोनिविशेषविश्लिष्टभ्रमो येन तस्मिन् सति। समरदर्शनार्थं मत्सरदनेकनभश्चरचारणानां देवकुशीलवानां, चक्रवाले मण्डले सति। ("चारणाश्च कुशीलवाः"। ("चक्रवालं तु मण्डलम्" इति द्वयोरप्यमरः)। चारुभटखण्डितद्विरदपादेन समाप्तं सम्यक् प्राप्तं, पिशाच्याः कर्णे यदुलूखलाभरणं तत्कौतुकं यत्र। समुत्पतन्नतिनिनद एव नान्दी नाटकादौ प्रयुज्यमानः काव्यार्थसूचकः श्लोको यत्र। ["नद्यृतश्च" इति कप्। "न कपि" इति ह्रस्वनिषेधः]। तथा च भरतः,—"आशीर्नमस्क्रियारूप-श्लोकः काव्यार्थसूचकः। नान्दीति कथ्यते"। क्रान्दिशीको भयपलायितः। ("क्रान्दिशीको भयद्रुतः" इत्यमरः)। भीरुः। ("शृगाले जम्बुके भीरुः शूरे वै दानवान्तरे" इति विश्वः)। जिह्मगः सर्पः। ("जीवा जीवन्तिकाभूम्योर्मौर्व्यां शिञ्जितजन्तुषु" इति विश्वप्रकाशः)। त्यागिन इव दातार इव, दानं मदजल-वितरणं, मार्गणानां बाणानां याचकानां च, सम्पातमसहन्तो महामृगा गजाः, रेजुः। ("महामृगः पुष्करिदीर्घनादकौ" इति हारावली)। उत्क्षिप्ता इवाभ्युत्क्षिप्तचित्ता

इव सदेवमणयः, सेना इव सेन्द्रद्युतयः तुरङ्गाश्च विरेजुः। कर्णाभ्यां श्रुतपरपरिवादाभ्यां, खलोदयसाधुविपत्तिसाक्षि-भ्यामक्षिभ्यां, मूर्द्ध्ना चास्थानेऽपि नमता विमुक्तोऽहमिति हर्षादिव ननर्त्त चिरं कबन्धः। ततः कृतपरिहासेनेव चक्षुः पिदधता, परापवादश्रवणभीरुणेव श्रोत्रवृत्तिं स्थगयता, सोन्मादेनेव वायुवेगविभ्रमेण पलितङ्करणेनेव सुरयोषिताम्, अन्ध-ङ्करणेनेव योधानां, तिमिरेणेव समरप्रदोषस्य, पतितेनेव विमुक्तगोत्रेण, मीमांसकदर्शनेनेव तिरस्कृतदिगम्बरदर्शनेन, सत्पुरुषेणेव विष्णुपदावलम्बिना रणजेन रजसा जजृम्भे। कश्चिद्राम इव रावणवधमकरोत्। कश्चित् कृष्ण इव नरक-च्छेदमकार्षीत्। कश्चिद्बौद्धसिद्धान्त इव क्षपितश्रुतिवचन-दर्शनोऽभवत्। कश्चित् क्षपणक इव कटाहतो बभूव। कश्चिदा-शङ्कितोरुभङ्गः सुयोधन इव पयसि विवेश। कश्चित् शरतल्पगतो भीष्म इव चिराय श्वसमासीत्। कश्चित् कर्ण इव विक्लवीकृत-

---

इव, चमूं क्षान्तिं पृथ्वीं च। तुरङ्गा अश्वाः, विरेजुः। ("कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्ध-कलेवरम्" इत्यमरः) इत्थं हर्षान्ननर्त्त, श्रुतपरपरिवादाभ्यां परापवादाभ्याम्। साक्षी साक्षाद्द्रष्टा। ["साक्षाद्द्रष्टरि संज्ञायाम्" इति साधुः]। अस्थाने अकारणस्थाने, नमता। ततो रजसा जजृम्भे प्रादुर्भूतम्। [जृभि गात्रविनामे, भावे लः]। कृतपरिहासेनेव चक्षुः पिदधता आच्छादयता, लोकाधिक्षेपमेतत्। वायुराकारो वास्य। योधानां भटानां, पलितङ्करणेन। ("पलितं जरसा शौक्ल्यम्" इत्यमरः) ["आढ्यसुभग" इति करणे ख्युन्। "अरुर्द्विषत—" इति मुम्]। समरप्रदोषस्य रणरजनीमुखस्य। पतितेन इव महापातकिनेव, विमुक्तगोत्रेण गोत्रं वंशः, गोत्रा पृथ्वी। आशङ्कित ऊर्वोर्भङ्गो येन; पक्षे—[illegible], भङ्गः पराजयः। शरतल्पं शरशय्याम्। चिराय [illegible]-[illegible]; अर्थोपपत्तिस्तु तेषां कुतो द्रष्टव्या; पक्षे— ("चिराय चिररात्राय चिरस्येति चिरार्थकाः" इत्यमरः)। विक्लवीकृतं विक्लवी-

सर्वाङ्गः शक्तिमोक्षमकरोत्। ततो विध्वस्तध्वजपटं, पतत्पताकं, च्युतचापचामरापीडं, स्खलत्खड्गं निधनमवाप सैन्यम्।

अनन्तरं यस्याश्रमस्तेन मुनिना पुष्पादिकमादायागतेन प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायमाश्रमो भग्नोऽतः शिलामयी भवेति शप्ताऽहम्। क्षणेन च वराकीं बहुदुःखमनुभवन्तीं मां विलोक्यार्य्यपुत्रकरस्पर्शावधिं शापान्तमकरोत्"।

ततः कन्दर्पकेतुः सममागतेन वासवदत्तया च सह स्वपुरं गत्वा यथाहृदयाभिलषितानि सुखान्यनुभवन् कालं निनाय।

इति महाकविसुबन्धुविरचिता वासवदत्ता
समाप्ता।

---

मृतं, सर्वाङ्गं यस्य, शक्तेर्बलस्य, मोक्षं त्यागम्; पक्षे—शक्तेर्वासवदत्ताया अमोघायाः, मोक्षं घटोत्कचे त्यागम्। ("शक्तिरायुधभेदे स्यादुत्साहादौ बले स्त्रियाम्" इति हेमचन्द्रः)। निधनं मरणम्। ("मरणं निधनोऽस्त्रियाम्" इत्यमरः)।

प्रतिपन्नवृत्तान्तेन ज्ञातवृत्तान्तेन। शप्ता [कर्मणि क्तः]। क्षणेन च वराकीं बहु दुःखं भवद्वियोगजम्, अनुभवन्तीं मां विलोक्य शापं शिलामयत्वरूपम्, आर्य्यपुत्रस्य करस्पर्शोऽवधिरन्तोऽस्य तादृशमकरोत्। "नागरोक्त्याऽऽर्य्यपुत्रेति नाट्योक्त्या च प्रयुज्यते" इति भरतः।

ततः कन्दर्पकेतुः समं वासवदत्तासङ्गमकालम्, आगतस्तेन मकरन्देन, वासवदत्तया च सह स्वपुरं कुसुमपुरं, गत्वा हृदयं मनोऽनतिक्रम्य यथाहृदयं मनोऽनुरूपम्, अभिलषितं येषु तानि सुखानि सम्भोगशृङ्गारसम्बन्धीनि, अनुभवन् कालं निनाय। ("चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः)।

वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। ["अधिकृत्य कृते ग्रन्थे" इत्यर्थे वृद्धाच्छः। तस्य "लुबाख्यायिकाभ्यो बहुलम्" इति लुप्] वासवदत्ताऽऽख्यायिका समाप्तेति पाठस्तु भ्रममूलकः।

वासवदत्ताव्याख्या समाप्ता।

---